प्रभावादद्भुता भूमेः सलिलस्य च तेजसा ।
परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता ॥
तस्माद्भौमेषु तीर्थेषु मानसेषु च नित्यशः ।
उभयेषु च यः स्नाति स याति परमां गतिम् ॥
'सलिलस्य तेजसा' तोयप्रभावेण ।

ब्रह्मपुराणे—

सर्वेण गाङ्गेन जलेन सम्य-
ङ्मृत्पर्वते[1]नाऽप्यथ भावदुष्टः ।
आजन्मनः स्नानपरोऽपि नित्यं
न शुद्ध्यतीत्येव वयं वदामः ॥
गङ्गादितीर्थेषु वसन्ति मत्स्या
देवालये पक्षिसङ्घाश्च नित्यम् ।
भावोज्झितास्ते न फलं लभन्ते
तीर्थाच्च देवायतनाच्च मुख्यात् ॥
भावं ततो हृत्कमले निधाय
तीर्थानि सेवेत समाहितात्मा ।
या तीर्थयात्रा कथिता मुनीन्द्रैः
कृता प्रयुक्ताऽप्यनुमोदिता वा ॥
तां ब्रह्मचारी विधिवत्करोति
सुसंयतो गुरुणा सन्नियुक्तः ।
सर्वस्वनाशेऽप्यथवा[2] नृपस्तु
सद्ब्राह्मणानग्रत एव कृत्वा ॥

1. U. पर्वतान
2. B. सर्वस्वनाथेऽथवा

यज्ञाधिकारेऽप्यथवा निवृत्ते
विप्रस्तु तीर्थानि [1]परिभ्रमेत ।
तीर्थेष्वलं यज्ञफले हि यस्मात्
प्रोक्तं मुनीन्द्रैरमलस्वभावैः ॥
यस्येष्टि[2] यज्ञेष्वधिकारिताऽस्य
वरं गृहं गृहधर्मांश्च सर्वे[3] ॥
एवं गृहस्थाश्रमसंस्थितस्य
तीर्थे गतिः पूर्वतरैर्निषिद्धा ।
सर्वाणि तीर्थान्यपि चाग्निहोत्र-
तुल्यानि नैवेति वयं वदामः ॥
यो यः कश्चित्तीर्थयात्रां तु गच्छेत्
सुसंयतः स च पूर्वं गृहे स्वे[4] ।
कृतोपवासः शुचिरप्रमत्तः
सम्पूजयेद्भक्तिनम्रो गणेशम् ॥
[5]देवान् पितॄन् ब्राह्मणांश्चैव साधून्
[6]भीमान् पितॄन् वित्तशक्त्या प्रयत्नात् ।
प्रत्यागतश्चापि तथा पुनस्तु
देवान् पितॄन् ब्राह्मणान् पूजयेच्च ।
एवं कुर्वतस्तस्य तीर्थाद्यदुक्तं
फलं तस्मान्नात्र सन्देहमस्ति ॥

'भावो' विशुद्धा मनोवृत्तिः । 'देवान् पितॄनि'ति तीर्थयात्रां करिष्यतो देवपितृब्राह्मणपूजनमावश्यकम् । 'पितॄन्

1. P. च परिभ्रमेत्तु for परिभ्रमेत
2. P. यस्येष्टि for यस्येऽपि in U.
3. B. धर्मांश्च सर्वान्
4. P. स्वगेहे for गृहे स्वे
5. P. देवानृषीन् for देवान् पितॄन्
6. B. and P. धीमान् for भीमान्

वित्तशक्त्या' इत्यनेन च विशेषतो भगवता पितृपूजा
कर्तव्यमिति विधीयते ।

देवीपुराणे—

तीर्थेषु ब्राह्मणं नैव परीक्षेत कथञ्चन ।
[1]अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ॥

सक्तुभिः[2] पिण्डदानञ्च संयावैः[3] पायसेन तु ।
कर्तव्यमृषिभिः प्रोक्तमेषाकेन[4] गुडेन च ॥
तिलपिण्याकं देयं तु भक्तिमद्भिर्नरैः सदा ।
श्राद्धं तत्र तु कर्तव्य[5]मन्वावाहनवर्जितम्[6] ॥
[7]श्वध्वाङ्क्षगृध्रकाकानां नैव दृष्टिहतं च यत् ।
श्राद्धं तत्तीर्थिकं प्रोक्तं पितॄणां तुष्टिकारकम्[8] ॥
अकालेऽप्यथवा काले तीर्थे श्राद्धं तथा नरैः ।
प्राप्तैरेव सदा कार्यं कर्तव्यं पितृतर्पणम् ॥
[9]पिण्डं दानं तु तच्छस्तं पितॄणां चाऽतिवल्लभम्[10] ।
विलम्बो नैव कर्तव्यो नैव विघ्नं समाचरेत् ॥

1. B. अथोऽर्थिनमनुप्राप्तम्
2. P. शक्तुभिः
3. B. संयातैः
4. B. and P. पिण्याकेन for एषाकेन
5. B. प्रकर्तव्यं for तु कर्तव्यम्
6. B. and P. मर्घावाहनवर्जितम्
7. B. श्वयक्षां for श्वध्वाङ्क्ष
8. B. पुष्टिहेतुकम्
9. P. च for तु ; B. पिण्डदानं for पिण्डं दानं
10. B. अतिदुर्लभम्

शङ्खः—

तीर्थं प्राप्याऽनुषङ्गेण स्नानं तीर्थे समाचरेत् ।
स्नानजं फलमाप्नोति [1]तीर्थयात्राफलं न तु ॥

तथा—

नृणां पापकृतां तीर्थे भवेत्पापस्य संक्षयः[2] ।
[3][यथोक्तफलदं तीर्थं भवेच्छुद्धात्मनां नृणाम् ॥

पैठीनसिः—

षोडशांशं स लभते यः परार्थेन गच्छति] ।
अर्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति ॥
प्रकृतिं कुशमयीं तीर्थवारिणि मज्जयेत् ।
मज्जयेत्तु यमुद्दिश्य अष्टभागं लभेत सः ॥

अत्र प्रयागव्यतिरिक्ततीर्थगमने [4]याननिषेधप्रमाणदर्शनान्न[5] तीर्थान्तरे यानगमने विरोधः । तीर्थोपवासश्च फलविशेषार्थः । "तीर्थमभिगम्य व्रतोपवासनियमयुक्तस्त्र्यहमवगाहमानस्त्रिरात्रमुषित्वा सर्वपापैः प्रमुच्यते स्वस्तिमांश्च भवती"ति देवलवचनात् । एकस्मिन्नपि दिवसे तत्तत्तीर्थविशेषप्राप्तौ बहून्यपि श्राद्धानि कर्तव्यानि ।

अकालेऽप्यथवा काले तीर्थश्राद्धं[6] तथा नरैः ।
प्राप्तैरेव सदा कार्यं कर्तव्यं पितृतर्पणम् ॥

इति देवीपुराणवचनात् ।

1. P. तीर्थयात्रामृतं न तु
2. P. पापस्य शमनं भवेत्
3. Omission supplied by P.
4. P. याननिषेधप्रमाण for यानप्रमाण in U.
5. न supplied by P.
6. B. तीर्थे श्राद्धम्

# अथ वाराणसीमाहात्म्यम्

तत्र [1]मत्स्यपुराणे—

ईश्वर उवाच—

वाराणसीह[2] भुवनत्रयसारभूता
रम्या सदा मम पुरी गिरिराजपुत्रि ।
अत्राऽऽगता विविधदुष्कृतकारिणोऽपि
पापक्षयाद्विरजसः प्रतिभान्ति मर्त्याः ॥
एवं स्मृतं प्रियतमं मम देवि नित्यं
क्षेत्रं विचित्रतरुगुल्मलतासुपुष्पम् ।
अस्मिन्मृतास्तनुभृतः पदमाप्नुवन्ति
[3]मोक्षाख्यमेव मनसाऽपि न संशयोऽत्र ॥

तथा—

इदं[4] गुह्यतमं क्षेत्रं सदा वाराणसी मम ।
सर्वेषामेव जन्तूनां हेतुर्मोक्षस्य सर्वदा ॥
अस्मिन् सिद्धाः सदा देवि मदीयव्रतमास्थिताः[5] ।
नानालिङ्गधरा नित्यं मम लोकाभिकाङ्क्षिणः ॥
अभ्यस्यन्ति परं योगं युक्तात्मानो जितेन्द्रियाः ।

1. १८०, ७८-७९
2. P. तु for इह
3. P. मूर्खागमेन रहिता न च संशयोऽत्र
4. १८०, ४७, ४९.
5. P. आश्रिताः

'नानालिङ्गधराः' मेखलाजिनादिलिङ्गधारिणश्चत्वार आश्रमिण इत्यर्थः ।

तथा—

[1]मन्मना मम भक्तश्च मयि सर्वार्पितक्रियः ।
यथा मोक्षमिहाऽऽप्नोति अन्यत्र न तथा क्वचित् ॥

तथा—

[2]विमुक्तं न मया यस्मान्मोक्ष्यते वा कदाचन ।
महत्क्षेत्रमिदं तस्मादविमुक्तमिति स्मृतम् ॥
नैमिशे च कुरुक्षेत्रे गङ्गाद्वारे च पुष्करे ।
स्नानात् संसेवनाद्वापि [3][न] मोक्षः प्राप्यते यतः ॥
इह संप्राप्यते येन तत एतद्विशिष्यते ।
प्रयागे वा भवेन्मोक्षो महाकालेऽथवा प्रिये ॥
अमरकण्टके तद्वत्तथा कायावरोहणे ।
कालञ्जरे महाभाग इह[4] वा मत्परिग्रहात् ॥
प्रयागादपि तीर्थाग्र्यादिदमेव महत्स्मृतम् ।

'इदमेव महत्स्मृत'मित्यल्पायासेनैवाऽत्र मोक्षप्राप्तेः ।

तथा—

[5]ध्यायतस्तत्र मां नित्यं योगाग्निर्दीप्यते भृशम् ।
कैवल्यं परमं [6]याति देवानामपि दुर्लभम् ॥
[7]अव्यक्तलिङ्गैर्मुनिभिः सर्वसिद्धान्तवेदिभिः ।
इह संप्राप्यते मोक्षो दुर्लभोऽन्यत्र कर्हिचित् ॥

1. P. जन्मना for मन्मना, १८०, ५१, ५२.
2. १८०, ५४, ५७
3. B. supplies "न" needed by metre and sense
4. P. इति for इह
5. १८०, ५९-७५
6. P. चातिदेवानामपि
7. P. अव्यक्तलिङ्गमुनिभिः

तेभ्यश्चाहं प्रयच्छामि योगैश्वर्यमनुत्तमम् ।
आत्मनश्चैव सायुज्यमीप्सितं स्थानमेव च ॥
[1]कुबेरस्तु महायक्षस्तथा सर्वार्पितक्रियः[2] ।
क्षेत्रसंसेवनादेव गणेशत्वमवाप ह ॥
संवर्तो भविता यश्च सोऽपि भक्त्या ममैव तु ।
इहैवाऽऽराध्य मां देवि सिद्धिं यास्यत्यनुत्तमाम् ॥
पराशरसुतो योगी ऋषिर्व्यासो महातपाः ।
[3]धर्मयुक्तो भविष्यंश्च वेदसंस्थाप्रवर्तकः ॥
[4]वत्स्यते सोऽपि पद्माक्षि क्षेत्रेऽस्मिन् मुनिपुङ्गवः ।
ब्रह्मा देवर्षिभिः सार्धं विष्णुर्वायुर्दिवाकरः ॥
देवराजस्तथा शक्रस्तथाऽन्ये त्रिदिवौकसः ।
उपासते महात्मानः सर्वे मामिह सुव्रताः ॥
अन्ये च योगिनः सिद्धाश्छन्नरूपा महाव्रते[5] ।
अनन्यमनसो भूत्वा मामिहोपासते सदा ॥
अलर्कश्च पुरीमेतां मत्प्रसादादवाप्स्यति ।
स चैनां पूर्ववत्कृत्वा चातुर्वर्ण्याश्रमाकुलाम् ॥
स्फीतां जनपदाकीर्णां भुक्त्वा च सुचिरं नृपः ।
मयि सर्वार्पितप्राणो मामेवं प्रतिपत्स्यते ॥
ततः प्रभृति चार्वङ्गि येऽपि[6] क्षेत्रनिवासिनः ।
गृहिणो लिङ्गिनो वापि मद्भक्ता मत्परायणाः ॥
मत्प्रसादाद्गमिष्यन्ति मोक्षं परमदुर्लभम् ।
विषयासक्तचित्तोऽपि त्यक्तधर्मरतिर्नरः ॥

1. P. कुबेरः सुमहान् यक्षः
2. B. सर्वार्पितं मयि
3. P. धर्मभक्तो
4. P. रंस्यते ; B. वसते
5. B. महाव्रताः
6. B. ये ये

इह क्षेत्रे मृतः सोऽपि संसारं न पुनर्विशेत् ।
ये पुनर्निर्ममा धीराः सत्त्वस्था विजितेन्द्रियाः ॥
व्रतिनश्च निरारम्भाः सर्वे ते[1] मयि भाविताः ।
देहभेदं समासाद्य दीप्यन्ते सङ्गवर्जिताः ॥
गता एव परं मोक्षं प्रसादान्मम सुव्रताः ।
जन्मान्तरसहस्रेषु युञ्जन् योगी [2]यमाप्नुयात् ॥
तमिहैव परं मोक्षं मरणादधिगच्छति ।
एतत्संक्षेपतो देवि क्षेत्रस्याऽस्य महत्फलम् ॥
अविमुक्तस्य कथितं मया ते गुह्यमुत्तमम् ।

'इहैव' जन्मनीति शेषः ।

तथा—

[3]अविमुक्ते परा सिद्धिरविमुक्ते परा गतिः ।
जप्तं दत्तं हुतं चेष्टं तपस्तप्तं कृतं च यत् ॥
दानमध्ययनं सर्वं यथा भवति चाऽक्षयम् ।
जन्मान्तरसहस्रेण यत्पापं पूर्वसञ्चितम् ॥
अविमुक्तं प्रविष्टस्य तत्सर्वं व्रजति क्षयम् ।
अविमुक्ताग्निना दग्धमग्नौ [4]तूलमिवाऽऽहितम् ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वै वर्णसङ्कराः ।
कृमिम्लेच्छाश्च ये चाऽन्ये सङ्कीर्णाः पापयोनयः ॥
कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ।
कालेन निधनं प्राप्ता अविमुक्ते शृणु प्रिये ॥
चन्द्रार्धमौलिनः सर्वे ललाटाक्षा वृषध्वजाः ।
शिवे मम पुरे देवि जायन्ते तत्र मानवाः ॥

1. सर्वतो for सर्वे ते
2. समाप्नुयात्
3. १८१, १६-२३
4. P. जलं for तूलं

अकामो वा सकामो वा अपि तिर्यग्गतोऽपि वा ।
अविमुक्ते त्यजन् प्राणान्मम लोके महीयते ॥
अविमुक्ते यदा गच्छेत्कदाचित्कालपर्ययात् ।
अश्मना[1] चरणौ भित्त्वा तत्रैव निधनं व्रजेत् ॥

तथा[2]—

यानि तीर्थानि श्रूयन्ते त्रिषु लोकेषु विश्रुते ।
अविमुक्तस्य पादे तु नित्यं सन्निहितानि वै ॥

तथा[3]—

आदेहपतनाद्यावत्तत् क्षेत्रं यो न मुञ्चति ।
ब्रह्मचर्यव्रतैः सम्यक् सम्यगिष्टं मखैर्भवेत् ॥

तथा[4]—

यस्तत्र निवसेद्विप्रः संयतात्मा समाहितः ।
त्रैकाल्यमपि भुञ्जानो वायुभक्षः सदा भवेत् ॥
निमेषमात्रमपि यो ह्यविमुक्ते तु भक्तिमान् ।
[ब्रह्मचर्यसमायुक्तः स परं प्राप्नुयात्तपः ॥
तत्र मासं वसेद्धीरो लघ्वाहारो जितेन्द्रियः[5] ।]
सम्यक् तेन व्रतं चीर्णं दिव्यं पाशुपतं महत् ॥
[6]जपन् मृत्युभयं तीर्त्वा स याति परमां गतिम् ।
नैःश्रेयसीं गतिं पुण्यां तथा योगगतिं भजेत् ॥
न हि [7]योगगतिर्लभ्या जन्मान्तरशतैरपि ।
प्राप्यते क्षेत्रमाहात्म्यात् प्रभावाच्छङ्करस्य च ॥

1. B. अस्मना चरणैर्भित्त्वा
2. १८१, ३१.
3. १८२, ८
4. १८२, १०, २७
5. [ ] supplied by P. only
6. P. and B. जन्ममृत्युभयं for जपन् मृत्युभयं
7. P. योगमतिः for योगगतिः

'नैःश्रेयसी गतिः' विशिष्टदेहप्राप्तिर्मोक्षानुकूला ।

ब्रह्महा योऽभिगच्छेत्तु अविमुक्तं कदाचन ।
तस्य क्षेत्रस्य माहात्म्याद्ब्रह्महत्त्या निवर्तते ॥
[1]आदेहपतनाद्यावत्तत्क्षेत्रं यो न मुञ्चति ।
न केवलं ब्रह्महत्त्या प्राकृतश्च निवर्तते ॥
[2][प्राप्य विश्वेश्वरं देवं न स भूयो विजायते ।]

'प्राकृतः' संसारबन्धः ।

अनन्यमानसो भूत्वा योऽविमुक्तं न मुञ्चति ।
तस्य देवः सदा तुष्टः सर्वान् कामान् प्रयच्छति ॥
द्वारं यत्सांख्ययोगानां स तत्र वसति प्रभुः ।
[3]सगुणो हि भवेद्देवो भक्तानामनुकम्पया ॥
अविमुक्तं परं क्षेत्रमविमुक्ते परा गतिः ।
अविमुक्ते परा सिद्धिरविमुक्ते परं पदम् ॥
अविमुक्तं निषेवेत देवर्षिगणसेवितम् ।
यदीच्छेन्मानवो धीरो[4] न पुनर्जन्म आत्मनः ॥
मेरोः शक्या गुणा वक्तुं द्वीपानां च तथैव च ।
समुद्राणां च सर्वेषां नाऽविमुक्ते तु शक्यते ॥
अन्तकाले मनुष्याणां छिद्यमानेषु मर्मसु ।
वायुना प्रेर्यमाणानां स्मृतिर्नैवोपजायते ॥
अविमुक्ते ह्यन्तकाले भक्तानामीश्वरः स्वयम् ।
कर्मभिः[5] प्रेर्यमाणानां कर्णजापं प्रयच्छति ॥
ईश्वरप्रेरितो याति दुष्प्रापमकृतात्मभिः ।
अशाश्वतमिदं ज्ञात्वा मानुष्यं बहुकिल्बिषम् ॥

1. B. Omits up to संसारबन्धः
2. [ ] Supplied by P.
3. सगण for सगुण
4. P. धीमान् for धीरः
5. B. Omits all words after प्रेर्यमाणानां to कर्णजापं प्रयच्छति

अविमुक्तं निषेवेत संसारभयमोचनम् ।
भोगमोक्षप्रदं दिव्यं बहुपापविनाशनम् ॥
विघ्नैरालोड्यमानोऽपि योऽविमुक्तं न मुञ्चति ।
स मुञ्चति जरामृत्युं जन्म चैतदशाश्वतम् ॥
अविमुक्तप्रसादात्तु शिवसायुज्यमाप्नुयात् ।

तथा—

[[1]यदि पापी यदि शठो यदि वा धार्मिको नरः ।
मुच्यते सर्वपापेभ्यः अविमुक्तं व्रजेद्यदि ॥

तथा—]

[2]सर्वगुह्योत्तमं स्थानं मम प्रियतमं शुभम् ।
धन्याः प्रविष्टाः सुश्रोणि मम भक्ता द्विजातयः ॥
मद्भक्तिपरमा नित्यं नान्यभक्ताश्च ये नराः ।
अस्मिन्प्राणान्परित्यज्य गच्छन्ति परमां गतिम् ॥
सदा यजति सत्रेण सदा दानं प्रयच्छति ।
सदा तपस्वी भवति अविमुक्ते स्थितो नरः ॥
यो मां [3]प्रयजते नित्यं तस्य तुष्याम्यहं प्रिये ।
सर्वदानानि यो दद्यात्सर्वयज्ञेषु दीक्षितः ॥
सर्वतीर्थाभिषेकी च स प्रपद्येत मामिह ।
अविमुक्तं सदा देवि ये व्रजन्ति सुनिश्चिताः ॥
ते तिष्ठन्तीह सुश्रोणि [4]मम भक्तास्त्रिविष्टपे ।
मत्प्रसादात्तु ते देवि दीप्यन्ते शुभलोचने ॥

1. [ ] Omission supplied by P. only
2. १८३, १४—२०.
3. P. पूजयते for प्रयजते
4. P. मद्भक्तास्तु त्रिविष्टपे

दुर्धर्षा दुर्धराश्चैव भवन्ति विगतज्वराः ।

तथा—

[1]अविमुक्ते यजन्ते तु मद्भक्ताः कृतनिश्चयाः ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥

[तथा[2]—]

अविमुक्तं गता ये वै महापुण्यकृतो नराः ।
[3]अक्षरा ह्यजराश्चैव अदेयाश्च भवन्ति ते ॥
मत्प्रसादाद्वरारोहे मामेव प्रविशन्ति ते ।
[4]शाकपर्णाशिनो दान्ताः संप्रक्षाला मरीचिपाः ॥
दन्तोलूखलिनश्चैव अश्मकुट्टास्तथा परे ।

'संप्रक्षालाः' सद्यःप्रक्षालकाः श्वस्तनभक्ष्यरहिताः[5] ॥

मासि मासि कुशाग्रेण जलमास्वादयन्ति ये ।
वृक्षमूलनिकेताश्च शिलाशय्यास्तथापरे ॥
आदित्यवपुषः सर्वे जितक्रोधा जितेन्द्रियाः ।
एवं [6]बहुविधैरन्यैरन्यत्र चरितव्रताः ॥
त्रैकाल्यमपि भुञ्जाना येऽविमुक्तनिवासिनः ।
तपश्चरन्ति चाऽन्यत्र कलां नाऽर्हन्ति षोडशीम् ॥
येऽविमुक्ते वसन्तीह स्वर्गे च प्रविशन्ति ते ।

1. १८३, २४
2. Supplied by P. and B.
3. B. अक्षया for अक्षराः, १८३, २७
4. १८३, ३१, ३९
5. Two words omitted by P.
6. P. बहुविधैः धर्मैः

मत्समः पुरुषो नास्ति त्वत्समा नास्ति योषिताम्[1]।
अविमुक्तसमं क्षेत्रं न भूतं न भविष्यति।
अविमुक्ते परो योगो ह्यविमुक्ते परा गतिः॥
अविमुक्ते परो मोक्षः क्षेत्रं नैवाऽस्ति तादृशम्।
परं गुह्यं प्रवक्ष्यामि तत्त्वेन वरवर्णिनि॥
अविमुक्ते महाक्षेत्रे यद्गुक्तं हि मया पुरा।
जन्मान्तरशतैर्देवि योगोऽयं यदि लभ्यते॥
मोक्षः शतसहस्रेण जन्मना लभ्यते न वा।
अविमुक्ते वसेद्देवि[2] मद्भक्तः कृतनिश्चयः॥
एकेन जन्मना सोऽपि योगं मोक्षं च विन्दति।

तथा—

क्षेत्रे मूर्तः सदा धर्मस्तस्मिन् सन्निहितः प्रिये।
चतुर्णामपि वर्णानां गतिस्तु परमा स्मृता॥

तथा—

[3]स्वर्णशृङ्गीं रौप्यखुरां [4]चैलकण्ठां पयस्विनीम्।
वाराणस्यां तु यो दद्यादाकर्णायतलोचने॥
गां दत्त्वा तु वरारोहे ब्राह्मणे वेदपारगे।
आसप्तमं कुलं तेन पावितं नात्र संशयः॥
यो दद्याद्ब्राह्मणे किंचित्तस्मिन् क्षेत्रे वरानने।
कनकं रजतं वस्त्रमन्नाद्यं बहु विस्तरम्॥

1. P. योषितः
2. P. वसन् देवि
3. १८३, ६७—७२
4. P. चैलाजिनपयस्विनीम्

अक्षयं चाऽव्ययं चैव [1]स्यात्तत्रस्थं सुलोचने ।
[2]शृणु तत्त्वेन तीर्थस्य विभूतिं [3]व्युष्टिमेव च ॥
तत्र स्नाता[4] महाभागे भवन्ति [5]विरजा जनाः ।
दशानामश्वमेधानां यज्ञानां यत्फलं [6]भवेत् ॥
तदवाप्नोति धर्मात्मा तत्र स्नात्वा वरानने ।
स्वल्पमल्पं च यो दद्याद्ब्राह्मणे वेदपारगे ॥
शुभां गतिमवाप्नोति अग्निवच्चैव दीप्यते ।

तथा—

[7]उपवासं तु यः कृत्वा विप्रान् संतर्पयेन्नरः ।
स सौत्रामणियज्ञस्य फलं प्राप्नोति मानवः ॥
एकाहारस्तु यस्तिष्ठेन्मासं तत्र वरानने ।
यावज्जीवकृतं पापं मासेनैकेन [8]नश्यति ॥
अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः ।
प्रविशन्ति सुखं ते मां न पुनर्भाविनो जनाः ॥
कुर्वन्त्यनशनं ये तु मद्भक्ताः कृतनिश्चयाः ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥
अर्चयेद्यस्तु मां देवि अविमुक्ते वरानने ।
तस्य धर्मं प्रवक्ष्यामि यावदाप्नोति मानवः ॥
दश सौवर्णिकं पुण्यं योऽविमुक्ते प्रयच्छति ।
अग्निहोत्रफलं धूपे गन्धदानेन तच्छृणु ॥

1. B. स्यात्तस्य शुभलोचने
2. B. शृणु त्वं तीर्थतत्त्वं च विभूतिं पुष्टिमेव च ।
3. P. पुष्टिमेव for व्युष्टिमेव
4. B. and P. स्नात्वा
5. P. निरुजो (रोगरहितः) for विरजा
6. P. लभेत् for भवेत्
7. १८३, ७५—८२, १०१—१०४
8. P. तस्य तत् for नश्यति

भूमिदानेन तत्तुल्यं गोप्रदानफलं स्मृतम् ।
सम्मार्जने पञ्चशतं सहस्रमनुलेपने ॥
मालाशतसहस्रं तु अनन्तं गीतवादनम् ।
ब्रह्महत्यापहं तीर्थं क्षेत्रमेतन्मया कृतम् ॥
श्मशानमेतद्भद्रं ते वरं च वरवर्णिनि ।
कालो भूत्वा जगदिदं[1] संहरामि सृजामि च ॥
देवेशि[2] सर्वगुह्यानां स्थानं प्रियतमं मम ।
मद्भक्तास्तत्र गच्छन्ति विष्णुभक्तास्तथैव च ॥
ये भक्ता भास्करे देवि लोकनाथे दिवाकरे ।
अत्रस्थो यस्त्यजेद्देहं मामेव प्रविशेत्तु सः ॥

तथा —

[3]ज्ञाने विहितनिष्ठानां परमानन्दमिच्छताम् ।
या गतिर्विहिता सद्भिः साऽविमुक्ते मृतस्य तु ॥
भवस्य प्रीतिरतुला त्वविमुक्ते ह्यनौपमा ।
असंख्येयं फलं तत्र ह्यक्षया च गतिर्भवेत् ॥
परं गुह्यं समाख्यातं श्मशानमिति संज्ञितम् ।
अविमुक्तं न सेवन्ते वञ्चितास्ते[4] नरा भुवि ॥
अविमुक्ते स्थितैः पुण्यैः पांसुभिर्वायुनेरितैः ।
स्पृष्ट्वा दुष्कृतकर्माणो यास्यन्ति परमां गतिम् ॥
अविमुक्तगुणान् वक्तुं देवदानवमानवैः[5] ।
न [6]शक्यते ह्यमेयत्वात्स्वयं यत्र भवस्थितः ॥

1. P. जगत्सर्वं for जगदिदं
2. P. देवेऽपि
3. १८४, ३—१०
4. B. वनितास्तु
5. P. मानवाः
6. P. न शक्यन्ते

नाऽनाहिताग्निर्नाऽयज्वा नाऽशुचिस्तस्करोऽपि वा ।
अविमुक्ते वसेद्यस्तु स वसेदीश्वरालये ॥
न तत्राऽपुण्यकृत् कश्चित् प्रभावादीश्वरस्य तु ।
अज्ञानाज्ज्ञानतो वापि स्त्रिया वा पुरुषेण वा ॥
यत्किञ्चिदशुभं कर्म कृतं मानुषबुद्धिना ।
अविमुक्ते प्रविष्टस्य तत्सर्वं भस्मसाद्भवेत् ॥

तथा—

[1]दृष्ट्वैतान्दीनकृपणान् पापान् दुष्कृतकारिणः ।
देवोऽनुकम्पया सर्वान्नयत्याशु परां गतिम् ॥
भक्तानुकम्पी भगवांस्तिर्यग्योनिगतानपि ।
भगवांस्तत्र नयति यत्र यान्ति न याज्ञिकाः ॥

तथा—

[2]न सा गतिः कुरुक्षेत्रे गङ्गाद्वारे[3] न पुष्करे ।
या गतिर्विहिता पुंसामविमुक्तनिवासिनाम् ॥
तिर्यग्योनिगताः सत्त्वा येऽविमुक्तकृतालयाः ।
कालेन निधनं प्राप्तास्तेऽपि यान्ति परां गतिम् ॥
मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ।
अविमुक्तं समासाद्य तत्क्षणाद्व्रजति क्षयम् ॥
'श्मशानमि'ति विख्यातमविमुक्तं शिवालयम् ।
तद्गृहं देवदेवस्य तत्तीर्थं तत्तपोवनम् ॥
तत्र ब्रह्मादयो देवा नारायणपुरोगमाः ।
योगिनश्च तथा साध्या[4] भगवन्तं सनातनम् ॥

1. १८४, १३—१४
2. १८४, १६—२२
3. P. च for न
4. B. सिद्धाः

उपासते शिवं भक्त्या मद्भक्ता मत्परायणाः ।
या गतिर्ज्ञानतपसां या गतिर्यज्ञयाजिनाम् ॥
अविमुक्ते मृतानां तु सा गतिर्विहिता शुभा ।

तथा—

[1]आदित्योपासनं कृत्वा विप्राश्चाऽमरतां गताः ।
अन्येऽपि तत्र ये वर्णा भवभक्ताः समाहिताः ॥
अविमुक्ते विमुक्तास्ते यास्यन्ति परमां गतिम् ।
अष्टौ मासान् विहारस्स्याद्यतीनां संयतात्मनाम् ॥
एकत्र चतुरो मासानर्धं च निवसेत्पुनः ।
अविमुक्ते प्रविष्टानां विहारस्तु न विद्यते ॥
न दोषोऽभिभवेत्तत्र दृष्टं शास्त्रे पुरातने ।
मोक्षोऽप्यसंशयस्तत्र पञ्चत्वं तु गतस्य वै ॥
स्त्रियः पतिव्रता याश्च[2] भवभक्ताः समाहिताः ।
अविमुक्ते विमुक्तास्ता यास्यन्ति परमां गतिम् ॥
अन्या याः कामचारिण्यः स्त्रियो भोगपरायणाः ।
कालेन निधनं प्राप्तास्ताश्च यान्ति परां गतिम् ॥
[3]यत्र योगश्च मोक्षश्च प्राप्यते दुर्लभो नरैः ।
अविमुक्तं समासाद्य नान्यद्गच्छेत्तपोवनम् ॥
सर्वात्मना तपः सत्यं प्राणिनां नात्र संशयः ।
अविमुक्ते वसेद्यस्तु मम तुल्यो भवेन्नरः ॥
यतो मया न विमुक्तमविमुक्तं ततः स्मृतम् ।
अविमुक्तं न सेवन्ते मूढा ये तामसा नराः ॥

1. १८४, ३१—४९
2. B. यास्तु
3. B. यो यत्र योगमोक्षश्च

विण्मूत्ररेतसां मध्ये ते वसन्ति पुनः पुनः ।
कामः क्रोधोऽतिलोभश्च दम्भस्तम्भोऽतिमत्सरः[1] ॥
निद्रा तन्द्रा तथाऽऽलस्यं पैशुन्यमिति ते दश ।
अविमुक्ते स्थिता विघ्नाः शक्रेण विहिताः स्वयम् ॥
विनायकोपसर्गश्च सततं मूर्ध्नि तिष्ठति ।
पुण्यमेतद्भवेत्सर्वं भक्तानामनुकम्पया ॥
परं गुह्यमिति ज्ञात्वा ततः शास्त्रानुदर्शनात् ।
व्याहृतं देवदेवैस्तु मुनिभिस्तत्त्वदर्शिभिः ॥
मेदसा विप्लुता भूमिरविमुक्ते तु वर्जिता ।
पूता समभवत्[2] सर्वा महादेवेन रक्षिता ॥
संस्कारस्तेन क्रियते भूमेरप्यत्र सूरिभिः ॥

'स्तम्भो' गर्वः । '[3]अतिमत्सरः' अत्यन्ताभ्यसूया । 'पैशुन्यं' अन्यदोषावहम् ? ।

तथा—

[4]तं वै प्राप्य महादेवमीश्वराध्युषितं शुभम् ।
अविमुक्तं कृतार्थोऽस्मीत्यात्मानमुपलक्षयेत् ॥
ऋषिदेवासुरगणै[5]र्जपहोमपरायणैः ।
यतिभिर्मोक्षकामैश्च अविमुक्तं निषेव्यते ॥
नाऽविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ।
ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम् ॥

1. P. विमत्सरः
2. B. प्रसन्नवत्
3. P. विमत्सरः
4. १८४, ४७—५०
5. B omits all words of the देवासुरगणैः to यान्ति परां गतिं below

तथा—

[1]भूलोके चाऽन्तरिक्षे च दिवि तीर्थानि यानि च।
अतीत्य वर्तते सर्वाण्यविमुक्तं प्रभावतः॥
ये [2]तु ध्यानं समासाद्य युक्तात्मानः समाहिताः।
सन्नियम्येन्द्रियग्रामं जपन्ति शतरुद्रियम्॥
अविमुक्ते स्थिता नित्यं कृतार्थास्ते द्विजातयः।

तथा—

[3]हन्यमानोऽपि यो विद्वान् वसेद्विघ्नशतैरपि।
स याति परमं स्थानं यत्र गत्वा न शोचति॥
जन्ममृत्युजरायुक्तः परं याति शिवालयम्।
अपुनर्मरणानां या सा गतिर्मोक्षकाङ्क्षिणाम्॥
यां प्राप्य कृतकृत्यः स्यादित्थं[4] मन्यन्ति[5] पण्डिताः।

तथा—

[6]न दानैर्न तपोभिश्च न यज्ञैर्नाऽपि विद्यया।
प्राप्यते गतिरिष्टा हि याऽविमुक्ते तु लभ्यते॥
नानावर्णा विवर्णाश्च चण्डाला ये जुगुप्सिताः।
किल्बिषैः पूर्णदेहाश्च प्रकृष्टैः पातकैस्तथा॥
भेषजं परमं तेषामविमुक्तं विदुर्बुधाः।

1. १८४, ५५—५७
2. B. च for तु
3. १८४, ६३—६५
4. B. इमं
5. P. अमन्यत for मन्यन्ति
6. १८४, ६६—७३

जात्यन्तरसहस्रेषु [1]अविमुक्ते म्रियेत यः ॥
भक्तो विश्वेश्वरे नित्यं[2] न स भूयोऽभिजायते ।
अत्र चेष्टं हुतं दत्तं तपस्तप्तं कृतं च यत् ॥
सर्वमक्षयमेतस्मिन्नविमुक्ते न संशयः ।
कालेनोपरतिं याति भवसायुज्यमक्षयम् ॥
कृत्वा पापसहस्राणि पश्चात्सन्तापमेत्य वै ।
योऽविमुक्तं न विमुञ्चेत्स याति परमां गतिम् ॥
उत्तरं दक्षिणं वाऽपि अयनं न विकल्पयेत् ।
[3]सर्वस्तस्त्र शुभः कालो ह्यविमुक्ते म्रियेत यः ॥
न तत्र कालो मीमांस्यः शुभो वा यदि वाऽशुभः ।
तस्य देवस्य माहात्म्यात् [4]स्थाणोर्वाऽद्भुतकर्मणः ॥
सर्वेषामेव नाथस्य सर्वेषां च विभोः स्वयम् ।

तथा—

[5]न हि योगादृते मोक्षः प्राप्यते भुवि मानवैः ॥
अविमुक्ते तु वसतां योगो मोक्षश्च सिद्ध्यति ।
अनेन जन्मनैवेह प्राप्यते गतिरुत्तमा ॥
एष एव प्रभावोऽस्ति क्षेत्रस्य परमेश्वरि ।
एकेन जन्मना देवि मोक्षं यास्यत्यनुत्तमम् ॥
अविमुक्तेन वसता व्यासेनाऽमिततेजसा ।
नैव लब्धा क्वचिद्भिक्षा भ्राम्यमाणेन यत्नतः ॥

1. B omits all words form अविमुक्ते to अविमुक्ते न संशयः three lines below
2. P. देवे for नित्यं
3. B. सर्वदास्य शुभः कालः अविमुक्ते म्रियते यः
4. P. ज्ञानमत्यद्भुतं महत्
5. P. १८५, १५—२४, ३३—४५

क्षुधाविष्टस्ततः क्रुद्धोऽचिन्तयच्छापमुत्तमम् ।
"[1]मा भूत्त्रिपुरुषी विद्या मा भूत्त्रिपुरुषं धनम् ॥
मा भूत्त्रिपुरुषं राज्यं व्यासो वाराणसीं शपत् ।
अविमुक्तेन वसतां जनानां पुण्यकर्मणाम् ॥
विघ्नं सृजामि सर्वेषां येन सिद्धिर्न विद्यते" ।
व्यासचित्तं तदा ज्ञात्वा देवदेव उमापतिः ॥
व्यासस्य दर्शनं दत्त्वा कृत्वा वेषन्तु मानुषम् ।
[[2]"एह्येहि भगवन् साधो भिक्षां ग्राहय सत्तम ॥
अस्मद्गृहे कदाचित्त्वं नाऽऽगतोऽसि महामुने" ।
एतच्छ्रुत्वा प्रीतमना भिक्षां ग्रहीतुमुद्यतः ॥]
भिक्षां दत्त्वा तु व्यासाय षड्रसाममृतोपमाम् ।
अनास्वादितपूर्वा सा भक्षिता मुनिना ततः ॥
भिक्षां व्यासस्ततो भुक्त्वा चिन्तयन् हृष्टमानसः ।
व्यासः कमलपत्राक्षि इदं वचनमब्रवीत् ॥
देवो देवी नदी गङ्गा मिष्टमन्नं शुभा मतिः ।
वाराणस्यां विशालाक्ष वासः कस्य न रोचते ॥
एवमुक्त्वा ततो व्यासो नगरीमवलोकयन् ।
चिन्तयंश्चापि तां भिक्षां हृदयानन्दकारिणीम् ॥
अपश्यत्पुरतो देवं देवीं च गिरिजां तदा ।
गृहाङ्गणस्थितं व्यासं देवदेवोऽब्रवीदिदम् ॥
"इह क्षेत्रे न वस्तव्यं क्रोधनस्त्वं महामुने" ।
एवं समयमापन्नो देवं व्यासोऽब्रवीद्वचः ॥

व्यास उवाच—

चतुर्दश्यां तथाऽष्टम्यां प्रवेशं दातुमर्हसि ।

1. P omits the line
2. [ ] Omission supplied by P and B

एवमस्त्वित्यनुज्ञाय तत्रैवाऽन्तरधीयत ॥
न तद्गृहं न सा देवी न देवो ज्ञायते क्वचित् ।
एवं त्रैलोक्यविख्यातः पुरा व्यासो महातपाः ॥
ज्ञात्वा क्षेत्रगुणान्सर्वान् स्थितस्तस्यैव पार्श्वतः ।
एवं व्यासं स्थितं ज्ञात्वा क्षेत्रं शंसन्ति पण्डिताः ॥

तथा—

[1]तपांसि यानि पठ्यन्ते व्रतानि नियमाश्च ये ।
सर्वतीर्थाभिषेकं तु सर्वदानफलानि च ॥
सर्वयज्ञेषु यत्पुण्यमविमुक्ते तदाप्नुयात् ।
अतीतं वर्तमानं च ज्ञानादज्ञानतोऽपि वा ॥
सर्वं तस्य च यत्पापं क्षेत्रं दृष्ट्वा विनश्यति ।
शान्तैर्दान्तैस्तपस्तप्तं यत्किंचिद्धर्मसंज्ञितम् ॥
सर्वं चैतदवाप्नोति अविमुक्ते जितेन्द्रियः ।
अविमुक्तं समासाद्य लिङ्गमर्चयते नरः ॥
[2][कल्पकोटिशतैश्चाऽपि नास्ति तस्य पुनर्भवः ।
अमरा ह्यक्रियाश्चैव क्रीडन्ति भवसन्निधौ ॥
क्षेत्रं तीर्थोपनिषदमविमुक्तं न संशयः ।

'तीर्थोपनिषदम्' तीर्थानां रहस्यमेतत् इत्यर्थः ।

अविमुक्ते महादेवमर्चयन्ति स्तुवन्ति वै ।
सर्वपापविमुक्तास्तु ते तिष्ठन्त्यजरामराः ॥
सर्वकामस्य ये यज्ञाः पुनरावर्तकास्स्मृताः ।
अविमुक्ते मृता ये च सर्वे ते ह्यनिवर्तकाः ॥
ग्रहनक्षत्रताराणां कालेन पतनाद्भयम् ।
अविमुक्ते मृतानान्तु पतनं नैव विद्यते ॥]

1. ११५, ५३—६६
2. [ ] supplied by P only

कल्पकोटिसहस्रैस्तु कल्पकोटिशतैरपि ।
न तेषां पुनरावृत्तिर्ये मृताः क्षेत्र उत्तमे ॥
संसारसागरे घोरे भ्रमन्तः कालपर्ययात् ।
अविमुक्तं समासाद्य गच्छन्ति परमां गतिम् ॥
ज्ञात्वा कलियुगे घोरं हाहाभूतमचेतनम् ।
अविमुक्तं न मुञ्चन्ति कृतार्थास्ते नरा भुवि ॥
अविमुक्तं प्रविष्टस्तु यदि गच्छेत्ततः पुनः ।
तदा हसन्ति भूतानि अन्योन्यकरताडनैः ॥
कामक्रोधेन लोभेन ग्रस्ता ये भुवि मानवाः ।
निष्क्रमन्ते नरा देवि दण्डनायकमोहिताः ॥

तथा—

[1]उद्देशमात्रं कथिता अविमुक्तगुणास्तथा[2] ।
समुद्रस्येव रत्नानामविमुक्तस्य विस्तरः ॥

ब्रह्मपुराणे—

ब्रह्मोवाच—

अविमुक्तं च भवतः स्थानं यद्वै पुरातनम् ।
कपालमोचनं तीर्थं तत्र तत्र भविष्यति ॥
अहं च त्वं स्थितस्तत्र विष्णुश्चाऽपि गमिष्यति ।
दर्शनाद्भवतस्तत्र महापातकिनश्च ये ।
तेऽपि भोगं समश्नन्ति विशुद्धा भवने मम ।
वरणा चाऽप्यसिश्चैव द्वे नद्यौ सुरवल्लभे ।
अन्तराले तयोः क्षेत्रं धरण्यां न विशेत् क्वचित् ।

1. १८४, ६१.
2. B. भुवि P. तव for तथा

तीर्थानां प्रथमं तीर्थं क्षेत्राणां प्रथमं तव ।
आदेहपतनाद्ये तु क्षेत्रं सेवन्ति मानवाः ।
ते मृता हंसयानेन दिव्यं यान्त्यकुतोभयाः ।
पञ्चक्रोशप्रमाणं तु क्षेत्रं दत्तं मया तव ।
क्षेत्रमध्ये यदा गङ्गा गमिष्यति सरित्पतिम् ।
तेन सा महती पुण्या पुरी रुद्र भविष्यति ॥
पुण्या चोदङ्मुखी गङ्गा प्राची चैव सरस्वती ।
उदङ्मुखी योजने द्वे गच्छते जाह्नवी नदी ॥
तत्र ते विबुधाः सर्वे मया सह सबान्धवाः ।
तत्रैव वस्तुमेष्यन्ति कपालं तत्र मोचय ॥
तस्मिंस्तीर्थे तु मे गत्वा पिण्डदानेन वै पितॄन् ।
श्राद्धैस्तु प्रीणयिष्यन्ति तेषां लोकोऽक्षयो दिवि ।
वाराणस्यां महातीर्थे नरः स्नात्वा विमुच्यते ॥
[सप्तजन्मकृतात् पापाद्गमनादेव मुच्यते ।][1]
तत्तीर्थं सर्वतीर्थानामुत्तमं परिकीर्तितम् ॥
त्यजन्ति तत्र ये प्राणान् प्राणिनः संयतास्तथा ।
रुद्रवत्ते समासाद्य मोदन्ते भवता सह ।
तत्र चाण्वपि यद्दत्तं दानं रुद्ररतात्मनाम् ।
महाफलं च तत्तेषां कुरुते भावितात्मनाम् ॥
खण्डस्फुटितसंस्कारं तत्र कुर्वन्ति ये नराः ।
ते रुद्रलोकमासाद्य मोदन्ते सुखिनः सदा ।
तत्र पूजा जपो होमः कृतो भवति देहिनाम् ॥
अनन्तफलदाः सर्वे रुद्रभक्तिसमन्वितैः ।
तत्र दीपप्रदानेन ज्ञानचक्षुरतीन्द्रियम् ॥
[प्राप्नोति धूपदानेन स्थानं रुद्रनिषेवितम् ।
सुश्वेतं तरुणं सौम्यं रूपवत्सुरभीयुतम् ॥

1. P only supplies the line [ ]

पश्वांकिचा (?) मोचयति स याति परमां गतिम् ॥][1]
पितृभिः सहितो मोक्षं गच्छत्यत्र न संशयः ।
अथ किं बहुनोक्तेन यद्दानं क्रियते नरैः ॥
[2]धर्मकामार्थमुद्दिश्य तदनन्तफलं भवेत् ।
स्वर्गापवर्गयोर्हेतुस्तद्धि तीर्थतमं भुवि ॥
स्नानं जप्यं तथा होमं ह्यनन्तफलसाधनम् ।
गत्वा वाराणसीतीर्थे यस्तु चान्द्रायणं चरेत् ॥
यस्तत्र पञ्चतां याति मोक्षं याति न संशयः ।
वसवः पितरो ज्ञेया रुद्राश्चैव पितामहाः ॥
आदित्यास्तु तथा तेषां विहिताः प्रपितामहाः ।
त्रिविधपिण्डदानाय विधिरुक्तो मयाऽनघ ॥
मनुष्यैः पिण्डदानादि [3]कार्यमत्राऽऽगतैः सदा ।
पिण्डदानं च तत्रैव सुपुत्रैः कार्यमादरात् ॥
सुपुत्राश्च पितॄणां तु भवन्ति सुखदायकाः ।
आदितीर्थं भव मया दर्शनात्तव मुक्तिदम् ॥
स्नातस्तु सलिले तत्र मुच्यते [4]भवबन्धनात् ।
विमुक्तो ब्रह्महत्त्यायास्तिष्ठ रुद्र यथासुखम् ॥
अविमुक्ते मया दत्ते तिष्ठ त्वं भार्यया सह ।

लिङ्गपुराणे—

ईश्वर उवाच—

अन्यच्च ते प्रवक्ष्यामि उपायज्ञानसाधनम् ।
यानि तीर्थानि चोक्तानि व्योमतन्त्रे पुरा मया ॥
तेषामप्यधिकं तीर्थमविमुक्तं महामुने ।

1. [ ] supplied only by P
2. B. सर्वधर्मार्थमुद्दिश्य
3. B. कार्यमात्रगतैः for कार्यमत्रागतैः
4. B. जन्मबन्धनात्

सर्वतीर्थानि च मया तस्मिन् स्थाने प्रतिष्ठिताः ॥
न कदाचिन्मया मुक्तं स्थानं च सततं मुने ।
सर्वतीर्थमयं पुण्यं गुह्याद्गुह्यतरं महत् ॥
स्थानानां चैव सर्वेषामादिभूतं महेश्वरम् ।
यत्र सिद्धिं परां प्राप्ता मुनयो[1] मुनिसत्तम ॥
अनेनैव शरीरेण प्राप्ता निर्वाणमुत्तमम् ।
तत्र चैव तु सम्भूतो ज्ञानं प्राप्नोति[2] मानवः ॥

तथा[3]—

गच्छ वाराणसीं शीघ्रं यत्र देवः सनातनः ।
देवताभिः समस्ताभिस्तत्र देवः पिनाकधृक् ॥
स्तूयते वरदो देवैर्ब्रह्मादिभिरभीक्ष्णशः[4] ।
तत्राऽसिर्वरणा चैव निम्नगे सिद्धसेविते ॥
बहुजन्माप्तपापानां दुष्टानां देहिनां भुवि ।
क्षालनं कुरुते देवि सा नदी यत्र जाह्नवी ॥
[या दृशा सर्वथा स्वर्गे सा नदीनां सरिद्वरा ।
या माता सर्वभूतानां सा गङ्गा यत्र निम्नगा[5] ॥]

'दृशा' दृष्टिः ।

अविमुक्तं परं क्षेत्रं शङ्करस्य सदैव हि ।
तत्र स्थानं प्रसिद्धं च त्रैलोक्ये शूलपाणिनः ॥
निम्नगाभ्यां पुरी सा च नाम्ना वाराणसी मुने ।
कृतस्नानेन देवेन ओङ्कारे संस्थितेन वा ॥

1. B. मुनीनां
2. B. चाप्नोति for प्राप्नोति
3. P supplies तथा
4. B. अभीषणैः
5. B supplies an omission; both U and P omit all words between दृशा and सर्वभूतानाम्

तस्मिन् काले वरो दत्तो देवदेवेन शम्भुना ।

देवदेव उवाच—

ये स्मरिष्यन्ति तत्स्थानमविमुक्तं सदा नराः ।
निर्धूतसर्वपापास्ते भविष्यन्ति गणोपमाः[1] ॥
[2]आगमिष्यन्ति ये द्रष्टुं ये जना योजनेन तु ।
ते ब्रह्महत्त्यां मोक्ष्यन्ति भविष्यन्ति ममाऽनुगाः ॥
विदित्वा भङ्गुरं लोकं येऽस्मिन्वत्स्यन्ति मे पुरे ।
अन्तकालेऽपि वत्स्यन्ति तेषां भवति मोक्षदम् ॥
मोक्षः सुदुर्लभो यस्मात् संसारश्चाऽतिभीषणः ।
अश्मना चरणौ भित्त्वा वाराणस्यां वसेन्नरः ॥
सर्वावस्थोऽपि यो मर्त्यो वाराणस्यां वसेत्सदा ।
स यां गतिमवाप्नोति पुण्यदानैर्न सा गतिः ॥
दुर्लभा तपसा सा च मर्त्यानां मुनिसत्तम ।
तत्र विप्र व्रज शीघ्रं मनस्स्थैर्यं यदीच्छसि ॥
मनसः स्थैर्यहेतुत्वं शृणुष्व गदतो मम ।
दक्षिणं चोत्तरं चैव तस्मिन् स्थाने स्थितं सदा ॥
विषुवं चैव मध्यस्थं देवानामपि दुर्लभम् ।
कलौ युगे तु मर्त्यानां स्थानं मोक्षावहेतुकम् ॥
भक्तिमाराधनेनैव स्नानपूजनतर्पणैः ।
चातुर्वर्ण्यविभागस्य शरीरं वैश्वरं पदम् ॥
पिङ्गला नाम या नाडी आग्नेयी सा प्रकीर्तिता ।
शुष्का सरिच्च सा ज्ञेया लोलार्को यत्र तिष्ठति ॥
इडानाम्नी च या नाडी सा सौम्या सम्प्रकीर्तिता ।
वरणा नाम सा ज्ञेया केशवो यत्र संस्थितः ॥

1. B. गणोत्तमाः
2. P. आगमिष्यति तद्द्रष्टुं

[1]आभ्यां मध्ये तु या नाडी सुषुम्ना च प्रकीर्तिता ।
मत्स्योदरी च सा ज्ञेया विषुवं[2] तत्प्रकीर्तितम् ॥

तथा—

श्रुत्वा कलियुगं घोरमल्पायुषमधार्मिकम् ।
सिद्धक्षेत्रं न सेवन्ते जायन्ते च म्रियन्ति च ॥
लिङ्गरूपधरास्तीर्थे हगि[3]चण्डेश्वरादयः ।
अविमुक्ते स्थिताः सर्वे शुद्ध्यन्ते पापकर्मिणः ॥

तथा—

अविमुक्तं परं क्षेत्रमविमुक्ते परा गतिः ।
अविमुक्ते परा सिद्धिरविमुक्ते परं पदम् ॥
अन्तकाले मनुष्याणां भिद्यमानेषु मर्मसु ।
वायुना प्रेर्यमाणानां स्मृतिर्नैवोपजायते ॥
येऽविमुक्ते स्थिता रुद्रा भक्तानां प्रीतिदायकाः ।
कर्णजापं प्रयच्छन्ति हगि[4]चण्डेश्वरादयः ॥

तथा—

अविमुक्तं महत्क्षेत्रं पुण्यकृद्भिर्निषेवितम् ।
सर्वपापक्षयकरं साक्षाच्छिवपुरं महत् ॥
श्मशानं परमं विद्धि क्षेत्राणां परमं तथा ।
पाप्मानमुत्सृजत्याशु प्रविष्टस्तत्र वै पुमान् ॥

1. P. आसां for आभ्यां
2. P. विष्णुवं
3. P. प्रमि (?) or हमि for हगि ; B. हमि
4. B. हमि

तथा—

वाराणस्यां तु यः कश्चित् प्रविष्टो ब्रह्मघातकः ।
तिष्ठते क्षेत्रबाह्ये तु [1]निर्गते गृह्यते पुनः ॥

'तिष्ठते' ब्रह्महत्त्येति शेषः ।

तथा—

लिङ्गरूपधरा मूर्ताः सप्तकोट्यस्तु सर्वतः ।
अविमुक्ते स्थिता रुद्रा भक्तानां सिद्धिदायकाः ॥

स्कन्दपुराणे—

तामुवाच सुरश्रेष्ठस्तदा देवीं गिरीन्द्रजाम् ।
मदीयं व्रतमास्थाय भक्तिमद्भिर्द्विजोत्तमैः ॥
यैर्यैर्योग इहाऽभ्यस्त[2]स्तेषामेकेन जन्मना ।
क्षेत्रस्याऽस्य प्रभावेण भक्त्या च मम भावतः ॥
अनुग्रहो मया ह्येवं क्रियते मुक्तिदः सदा ।
तस्मादिदं महत्क्षेत्रं ब्रह्माद्यैः सेव्यते मम ॥
श्रुतिमद्भिश्च विप्रेन्द्रैः संसिद्धैश्च तपस्विभिः ।
अष्टम्यां च, चतुर्दश्यां पक्षयोरुभयोरपि ॥
शशिभानूपरागेषु कार्त्तिक्यां च विशेषतः ।
सर्वपर्वसु पुण्येषु विषुवेष्वयनेषु च ॥
पृथिव्याः सर्वतीर्थानि वाराणस्यां तु जाह्नवी ।
उत्तरप्रवहां पुण्यां मम मौलिविनिर्गताम् ॥
पितुस्ते गिरिराजस्य शुभां हिमवतः सुताम् ।
भजन्ते सर्वतोऽभ्येत्य तां श्रृणुष्व वरानने ॥
सन्निहत्य कुरुक्षेत्रं सार्द्धं तीर्थशतैस्तथा ।

1. P. निर्गतं
2. P. इहा सत (?)

नैमिशं पुष्करं चैव प्रयागं सपृथूदकम् ॥
सन्ध्या सप्तऋचं चैव सर्वा नद्यः सरांसि च ।
समुद्राः सप्त चैवाऽत्र देवतीर्थानि कृत्स्नशः ॥
भागीरथीं समेष्यन्ति सर्वपर्वसु काशिगाम् ।
अविमुक्तेश्वरं मां च काशिस्थमचलात्मजे ॥
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च[1] ।
प्रविशन्ति सदाऽभ्येत्य पुण्येऽस्मिन्सर्वपर्वसु ॥
केदारे चैव यल्लिङ्गं यच्च लिङ्गं महालये ।
मध्यमेश्वरसंज्ञं च तथा पशुपतीश्वरम् ॥
शङ्कुकर्णेश्वरं चैव गोकर्णौ च तथा शुभौ ।
[2]द्रुमिचण्डेश्वरं चैव भद्रेश्वरमथैव च ॥
स्थानेश्वरमथैकाम्रं [3]कामेश्वरमजेश्वरम् ।
भैरवेश्वरमीशानं तथा कायावरोहणे ॥
यानि चान्यानि पुण्यानि स्थानानि मम भूतले ।
तानि सर्वाण्यनेकानि काशीपुर्यां विशन्ति माम् ॥
सर्वपर्वसु पुण्येषु गुह्यं चैतदुदाहृतम् ।
तेनेह लभ्यते जन्तोर्विपन्नस्याऽमृतं पदम् ॥
स्नातस्य चैव गङ्गायां दृष्टेन च मया शुभे ।
सर्वयज्ञफलैस्तुल्यमिष्टैः शतसहस्रशः ॥
सद्य एवमवाप्नोति किं ततः परमुत्तमम् ।
सर्वायतनमुख्यानां दिवि भूमौ गिरिष्वपि ॥
नाऽतः परतरं देवि बुद्ध्यस्वाऽस्तीति कृत्स्नशः ।

1. P. तु for च
2. B. P. द्रुमि (?) or द्रुगि
3. B. P. कालेश्वरं for कामेश्वरं

ब्रह्मार्कवैश्वानरशक्रचन्द्रै-
जलेन्द्रवित्ताधिपवायुभिश्च ।
गन्धर्वयक्षोरगसिद्धसङ्घैः
सार्धं सदा सेवितमेतदग्र्यम् ॥

स्थानं ममेदं हिमशैलपुत्रि
गुह्यं सदा क्षेत्रमिदं सुपुण्यम् ।
विमोक्षसिद्धिं च फलं हि तत्त्वं
[1]सिद्धाः प्रबुद्धा मुनयो वदन्ति ॥

क्षेत्रेऽस्मिन्निवसन्ति ये सुकृतिनो भक्ताः सदा मानवाः[2]
पश्यन्तो द्रुयमादरेण शुचयः सन्तः सदा मत्पराः ।
ते मर्त्या भयदुःखपापरहिताः[3] संशुद्धकर्मक्रियाः
भित्त्वा[4] सम्भवबन्धजालगहनं विन्दन्ति मोक्षं परम् ॥

एवमेतत् सुविस्तीर्णं नानावनलताकुलम् ।
जाह्नव्याऽलङ्कृतं पुण्यं क्षेत्रं प्रियतमं मम ॥
भागीरथीमिहाऽऽसाद्य वाराणस्यां ममाऽऽस्पदे[5] ।
अश्वमेधशतं प्राप्य ब्रह्मलोकं च विन्दति ॥
नाऽतः पुण्यतरं देवि नाऽतो गुह्यतमं क्वचित् ।
नाऽतः शुभतरं किंचिन्नाऽतः परतरं मम ॥

क्षेत्रं ममेदं सुरसिद्धजुष्टं
सम्प्राप्य मर्त्यः सुकृतप्रभावात् ।
ख्यातो भवेत्सर्वसुरासुराणां
मृतश्च यायात्परमं पदं च ॥

1. B. सिद्धाश्च बद्धा
2. P. मां नराः B. मामकाः
3. B. पाशरहिताः for पापरहिताः
4. P. कृत्वा
5. B. इहाऽऽददे

तथा—

ब्रह्मघ्नगोघ्नगुरुतल्पगभिन्नवृत्ति[1]-
न्यासापहारिकुहकादिनिषिद्धवृत्तिः ।
संसारभूतदृढपाशविमुक्तदेहो
वाराणसीं भवपुरीं समुपैति लोकः ॥

ब्रह्मपुराणे—

वरणा चाऽप्यसिश्चैव द्वे नद्यौ सुरवल्लभे ।
अन्तराले तयोः क्षेत्रं धरण्यां न विशेत् क्वचित् ॥

मत्स्यपुराणे—

[2]द्वियोजनमथाऽर्द्धं च तत्क्षेत्रं पश्चिमे स्मृतम् ।
अर्धयोजनविस्तीर्णं दक्षिणेऽन्तरतः स्मृतम् ॥
वरणा च नदी यावद्यावच्छुष्कनदी भवेत् ।
एष क्षेत्रस्य विस्तारः प्रोक्तो देवेन धीमता ॥

तथा—

[3]द्वियोजनं तु तत्क्षेत्रं पूर्वपश्चिमतः स्मृतम् ।
अर्धयोजनविस्तीर्णं दक्षिणेऽन्तरतः स्थितम् ॥
वरणा च नदी यावद्यावच्छुष्कनदी तथा ।
भीष्मचण्डीकमारभ्य पर्वतेश्वरमन्तिके ॥

ब्रह्मपुराणे—

पञ्चक्रोशप्रमाणं तु क्षेत्रं दत्तं मया तव ।

1. P. मित्रवृत्ति for भिन्नवृत्ति
2. १८४, ५०—५२
3. १८३, ६१—६२

[1]यत्र चोदङ्मुखी गङ्गा प्राची वाऽपि सरस्वती ॥

उदङ्मुखी[2] योजने द्वे गच्छते जाह्नवी नदी ।

स्कन्दपुराणे—

चतुःक्रोशं चतुर्दिक्षु क्षेत्रमेतत् प्रकीर्तितम् ।
योजनं विद्धि चार्वङ्गि मृत्युकालेऽमृतप्रदम् ॥

लिङ्गपुराणे—

कृत्तिवाससमारभ्य क्रोशं क्रोशं चतुर्दिशम् ।
योजनं तत्र तत्क्षेत्रं गणै रुद्रैश्च संवृतम् ॥
तस्य मध्ये यदा लिङ्गं भूमिं भित्त्वा समुत्थितम् ।
मध्यमेश्वरनामाख्यं ख्यातं सर्वसुरासुरैः ॥
अस्मादारभ्य लिङ्गात्तु क्रोशं क्रोशं चतुर्ष्वपि ।
योजनं विद्धि तत्क्षेत्रं मृत्युकालेऽमृतप्रदम् ॥
एवं क्षेत्रस्य सन्न्यासः पुराणे परिकीर्तितः ।
अस्मात्तु परतो देवि विहारो नैव विद्यते ॥

तथा लिङ्गपुराणे—

देव्युवाच—

वाराणस्यां तु किं गुह्यं स्थानं किं च तव प्रिये ।
किं रहस्यं च लिङ्गानां के ह्रदास्तत्र विश्रुताः ॥
के कूपाः कानि कुण्डानि लिङ्गानां स्थापकाश्च के ।
कस्मिन् स्थाने कृतं कर्म ज्ञाननिष्ठं प्रजायते ॥

1. P. पुण्या for यत्र
2. B omits all words after उदङ्मुखी up to मृत्युकाले below

[1]एतदाचक्ष्व मे सर्वं यद्यनुग्रहभागहम् ।

देवदेव उवाच—

रुचिरं स्थानमासाद्य अविमुक्तं तु मे[2] गृहम् ।
न कदाचिन्मया मुक्तमविमुक्तं ततः स्मृतम् ॥
अनेनैव प्रकारेण अविमुक्तं तु कथ्यते ॥
अविशब्देन पापं तु कथ्यते वेदवादिभिः ॥
तेन पापेन तत् क्षेत्रं वर्जितं वरवर्णिनि ।
सिद्धाः पाशुपताः श्रेष्ठास्तन्निष्ठास्तत्परायणाः ॥
उपासते च मां नित्यं तस्मिन् स्थाने स्थितास्सदा ।
पूर्वोत्तरे दिग्विभागे तस्मिन् क्षेत्रे तु सुन्दरि ॥
सुरासुरैः स्तुतश्चाऽहं तत्र स्थाने यशस्विनि[3] ।
[4]दिव्यं वर्षसहस्रं तु स्तुतोऽहं विविधैः स्तवैः ॥
उत्पन्नं मम लिङ्गं तु भित्त्वा भूमिं यशस्विनि ।
तेषामनुग्रहार्थाय लोकानां भक्तिभावतः[5] ॥
वाराणस्यां महादेवि तत्र स्थाने स्थितो ह्यहम् ।
तं दृष्ट्वा मनुजो देवि पशुपाशैर्विमुच्यते[6] ॥
कूपस्तत्रैव संलग्नो महादेवस्य चैव हि[7] ।
तत्रोपस्पर्शनाद्देवि लभेद्वागीश्वरीं गतिम् ॥
तत्र वाराणसी देवी स्थिता विग्रहरूपिणी ।

1. B omits this half-verse
2. B, ते
3. P. सुदुर्भितम् for यशस्विनि
4. B omits this line and the next.
5. P. भावितः
6. B. प्रमुच्यते
7. B. P. चोत्तरे

मानवानां हितार्थाय स्थिता कूपस्य[1] पश्चिमे ॥
वाराणसीं तु यो दृष्ट्वा भक्त्या चैव नमस्यति ।
तस्य तुष्टा च सा देवी वसतिं च प्रयच्छति ॥
महादेवस्य पूर्वेण [2]गोप्रेक्षमिति विश्रुतम् ।
तेन दृष्टेन सुश्रोणि पूर्वोक्तं फलमाप्नुयात् ॥

'पशुपाशैः' संसारबन्धैः । 'उपस्पर्शनात्' स्नानात् । 'वागीश्वरीगतिः' [3]सारस्वतलोकप्राप्तिः । 'पूर्वोक्तं फलम्' पशुपाशच्छेदलक्षणम् ।

स्कन्दपुराणे—

गोप्रेक्षेश्वरमाहात्म्यं[4] दृष्ट्वाऽभ्यर्च्य च मानवः ।
न दुर्गतिमवाप्नोति कल्मषैश्च विमुच्यते ॥

लिङ्गपुराणे—

ईश्वर उवाच—

गोप्रेक्षस्योत्तरेणाऽथ अनसूयाख्यलिङ्गकम् ।
तं दृष्ट्वा मानवो देवि गतिं च लभते पराम् ॥
पश्चान्मुखं च तल्लिङ्गमनसूयाप्रतिष्ठितम् ।
अनसूयेश्वरस्याऽग्रे गणेश्वरमिति स्मृतम् ॥
तेन दृष्टेन लभते गणेशस्य सलोकताम्[5] ।

1. P. देवस्य for कूपस्य
2. B. गोक्षेत्रं for गोप्रेक्षम्
3. B. क्षात्ररतमलोकप्राप्तिः
4. B. आगत्य for माहात्म्यं B. आसाद्य
5. P supplies words in brackets. Udaipur Ms. reads पावकीव गणेशताम् and B यावत्कालं गणेशताम्

गणेश्वरात् पश्चिमेन हिरण्यकशिपुः पुरा ॥

स्थापयामास मे लिङ्गं [1]कूपस्यैव समीपतः ।
तस्यैव पश्चिमे देवि लिङ्गं सिद्धेश्वरं स्मृतम् ॥

दर्शनादेव मे लिङ्गं सर्वसिद्धिप्रदायकम् ।
अन्यदायतनं भद्रे शृणुष्व गदतो मम ॥
वृषभेश्वरनामानं लिङ्गं तत्रैव तिष्ठति ।

पूर्वामुखं [2]महेशानि गोप्रेक्षस्य तु नैर्ऋते ॥
तेन दृष्टेन सुश्रोणि अभीष्टं फलमाप्नुयात् ।

तथा—

गोप्रेक्षस्य दक्षिणतः स्थापितं लिङ्गमुत्तमम् ।
दधीचेश्वरनामानं सर्वकामफलप्रदम् ॥

दधीचेश्वरसामीप्ये दक्षिणे वरवर्णिनि ।
अत्रिणा स्थापितं लिङ्गं दैवमार्तिहरं शुभम् ॥
[3]अत्रीश्वराद्दक्षिणतः सूर्यखण्डमुखेऽपि च ।

मधुकैटभाभ्यां सुश्रोणि लिङ्गसंस्थापनं कृतम् ॥

तत्र पश्चान्मुखो देवि विसमन्धाः[4] ? प्रपठ्यते ।
पूर्वामुखं कैटभस्य लिङ्गं त्रैलोक्यविश्रुतम् ॥
गोप्रेक्षकस्य पूर्वेण लिङ्गं वै बालकेश्वरम् ।

बालकेश्वरसामीप्ये विज्वरेश्वरसंज्ञितम् ॥

1. B omits all words up to सर्वसिद्धिप्रदायकम् two lines below
2. P. श्रुतं भद्रे for महेशानि
3. B omits two lines from here
4. B and P समधो:

तेन दृष्टेन सुश्रोणि [1]ज्वरो नश्यति तत्क्षणात् ।
[2]विज्वरेश्वरपूर्वेण देवेश्वरमिति श्रुतम् ॥
[3]ईशानाभिमुखं लिङ्गं कोणे तस्य मुखानि वै ।
तेन दृष्टेन सुश्रोणि चतुर्वेदो भवेद्द्विजः[4] ॥
[5]वेदेश्वरस्योत्तरतः स्वयं तिष्ठति केशवः ।
[6]क्षेत्रस्य कारणं चाऽस्य क्षेत्रज्ञ इति चोच्यते ॥
तेन दृष्टेन सुश्रोणि सर्वं दृष्टं चराचरम् ।
तत्समीपे तु सुश्रोणि लिङ्गं मे सङ्गमेश्वरम् ॥
तेन दृष्टेन सुश्रोणि शिष्टैः सह समागमः ।

स्कन्दपुराणे—

नदी वाराणसी चेयं पुण्या पापप्रमोचनी ।
क्षेत्रमेतदलङ्कृत्य जाह्नव्या सह सङ्गता ॥
[7]स्थापितं सङ्गमे चास्मिन् ब्रह्मणा लिङ्गमुत्तमम् ।
सङ्गमेश्वरनामानं ख्यातं जयति दृश्यताम् ॥
सङ्गमे देवनद्याश्च यः स्नात्वा मनुजः शुचिः ।
अर्चयेत् सङ्गमेशं तु तस्य जन्मभयं कुतः ॥

लिङ्गपुराणे—

1. P. सर्वं दृष्टं चराचरम्
2. P substitutes केशवस्य पूर्वेण विश्रुतं सङ्गमेश्वरम्, and the line is given after तेन च दृष्टेन below
3. P omits this line
4. P has ज्वरो नश्यति तत्क्षणात् for the second quarter
5. P omits the line
6. P omits the line
7. B omits two lines from here

सङ्गमेशस्य पूर्वेण लिङ्गं चैव चतुर्मुखम् ।
ब्रह्मणा स्थापितं भद्रे प्रयागमिति कीर्त्यते ॥

तेन दृष्टेन लभते ब्रह्मणः पदमुत्तमम् ।
तत्र सा शाङ्करी देवी [1]ब्रह्मवृक्षेऽवतिष्ठते ॥
शान्तिं करोति सर्वेषां ये च तीर्थनिवासिनः ।
अतः परं तु संवेद्यं गङ्गावरणसङ्गमम् ॥

श्रवणद्वादशीयोगो बुधवारे यदा भवेत् ।
तदा तस्मिन्नरः स्नात्वा सन्निहत्या फलं लभेत् ॥
श्राद्धं कृत्वा तु यस्तत्र तस्मिन् काले यशस्विनि ।
तारयित्वा पितॄन् सर्वान् विष्णुलोकं स गच्छति ॥

मत्स्यपुराणे—

[2]वाराणसीजाह्नवीभ्यां सङ्गमे लोकविश्रुते ।
दत्त्वाऽन्नं च विधानेन स भूयो नाऽभिजायते ॥

लिङ्गपुराणे—

वरणायास्तटे पूर्वे कुम्भीश्वरमिति स्मृतम् ।
कुम्भीश्वरात्तु पूर्वेण कालेश्वरमिति स्मृतम् ॥
कालेश्वरस्योत्तरतो महातीर्थं वरानने ।
कपिलाह्रदनामानं ख्यातं सर्वसुरासुरैः ॥
तस्मिन् ह्रदे तु यः स्नानं कुर्याद्भक्तिपरायणः ।
वृषध्वजं च वै दृष्ट्वा राजसूयफलं लभेत् ॥
नरकस्थास्ततो देवि पितरः सपितामहाः ।

1. B. बिल्ववृक्षे for ब्रह्मवृक्षे
2. १८३, ७३.

पितृलोकं प्राप्नुवन्ति तस्मिन् श्राद्धे कृते तु वै[1] ॥
गयायां चाऽष्टगुणितं पुण्यं प्रोक्तं महर्षिभिः ।
तस्मिन् श्राद्धे कृते भद्रे पितॄणामनृणो भवेत् ॥

स्कन्दपुराणे—

कपिलाह्रदतीर्थेऽस्मिन् स्नात्वा संयतमानसः ।
वृषध्वजमिमं दृष्ट्वा सर्वयज्ञफलं लभेत् ॥

लिङ्गपुराणे—

पश्चिमे तु दिशाभागे महादेवस्य भामिनि ।
स्कन्देन स्थापितं लिङ्गं मम भक्त्या सुरेश्वरि ॥
तेन दृष्टेन गच्छन्ति स्कन्दस्यैव सलोकताम् ।
तत्र शाखैर्विशाखैश्च नैगमीयैश्च सुन्दरि ॥
स्थापितानि च लिङ्गानि गणैः सर्वैर्बहूनि च[2] ।

'शाखा-विशाख-नैगमीयाः' गणविशेषाः ।

स्कन्देश्वरस्योत्तरतो बलभद्रप्रतिष्ठितम् ।
तेन दृष्टेन देवेशि अनन्तफलमाप्नुयात् ॥
स्कन्देश्वराद्दक्षिणतो महालिङ्गं प्रतिष्ठितम् ।
पश्चिमाभिमुखं लिङ्गं स्थापितं नन्दिना पुरा ॥
तं दृष्ट्वा मनुजो देवि [3]नन्दिलोकमवाप्नुयात् ।
नन्दीश्वरात् पश्चिमतो लिङ्गं पश्चान्मुखं स्थितम् ॥
स्वर्लीनसदृशं भद्रे नन्दिपित्रा प्रतिष्ठितत् ।
शिलाक्षेश्वरनामानं सुरसङ्घैः प्रपूजितम् ॥

1. B. भुवि
2. P. महात्मभिः for बहूनि च
3. P. नान्दीशं for नन्दि

अन्यत्तत्र तु विख्यातं हिरण्याक्षेश्वरं विभुम् ।
हिरण्याक्षेण दैत्येन स्थापितं मम भक्तितः ॥
हिरण्याख्यस्य सामीप्ये अन्यैर्देवैः सहस्रशः ।
स्थापितानि च लिङ्गानि भक्त्या चैव फलार्थिभिः ॥
अन्यद्वै देवदेवस्य स्थितं पश्चान्मुखं स्मृतम्[1] ।
तत्र स्थाने वरारोहे हिरण्याक्षस्य दक्षिणे ॥
तेषां पश्चिमदिग्भागे अट्टहासं स्थितं शुभम् ।
मुखं लिङ्गं तु तद्देवि पश्चिमाभिमुखं स्थितम् ॥
प्रसन्नवदने देवि सर्वपातकनाशकम् ।
तं दृष्ट्वा मानवो देवि ऐशानं लोकमाप्नुयात् ॥
अट्टहाससमीपेन पश्चिमेन यशस्विनि ।
[2]मित्रावरुणनामानौ पूर्वद्वारे व्यवस्थितौ ॥
मित्रावरुणलोकस्तु तयोः सन्दर्शनाद्भवेत् ।
अन्यत्तत्रैव विख्यातं वसिष्ठेशमिति स्थितम्[3] ॥
स्थापितं तत्र तल्लिङ्गं याज्ञवल्क्येन वै पुरा ।
चतुर्मुखं च तल्लिङ्गं सर्वपापक्षयकरम् ।
अन्यत्तत्रैव संलग्नं मैत्रेय्या स्थापितं शुभम् ॥

1. P. श्रुतम्
2. Folio 11 in the Bhonsle Ms. which should begins here is lost
3. P. स्मृतम्
P adds here :—
पूर्वामुखं स्थितं लिङ्गं अट्टहासस्य नैर्ऋते ।
तेन दृष्टेन लभते गतिमिष्टां च शाश्वतीम् ॥
तस्यै देवसमीपस्थं मुखलिङ्गं च तिष्ठति ।
भक्त्या प्रतिष्ठितं साध्व्या अरुन्धत्या शुभार्थदम् ॥
तस्य पश्चिमदिग्भागे नाम्ना कृष्णेश्वरं स्मृतम् ।

तेन दृष्टेन लभते परं ज्ञानं सुदुर्लभम् ।
याज्ञवल्क्येश्वरस्याऽपि पश्चिमे पश्चिमाननम् ॥
प्रह्लादेश्वरनामानमद्वैतफलदायकम् ।
प्रह्लादेश्वरात् पुरतः स्वयंलीनं तु तिष्ठति ॥
[1]स्वर्लीनेश्वरनामानं सुमहाफलदायकम् ।
ज्ञानविज्ञाननिष्ठानां परमानन्दमिच्छताम् ॥
या गतिर्विहिता तेषां स्वर्लीने तु मृतस्य च ।
स्वर्लीनात् पुरतो लिङ्गं स्थितं पूर्वमुखं शुभम् ॥
वैरोचनेश्वरं नाम स्थापितं दैत्यसूनुना ।
तस्य चैवोत्तरे देवि लिङ्गं पश्चान्मुखं स्मृतम् ॥
बलिना स्थापितं तत्तु शिवालोकपरायणम् ।
अन्यच्चैतत् स्थिरं लिङ्गं बाणेश्वर[2] इति स्थितम् ॥
राक्षसी तु महाभीमा[3] नाम्ना शालकटंकटा ।
तया च स्थापितं भद्रे तस्य चोत्तरतः शुभम् ॥
अन्यदायतनं पुण्यं तस्मिन्स्थाने यशस्विनि ।
हिरण्यगर्भं विख्यातं पुण्यं तस्याऽपि दर्शनम् ॥
मोक्षेश्वरं तु तत्रैव स्वर्गेश्वरमतः परम् ।
एतौ दृष्ट्वा सुरेशानि स्वर्गं मोक्षं च विन्दति ॥
वासुकीश्वरनामानं तयोश्चोत्तरतः शुभम् ।
चतुर्मुखं तु तल्लिङ्गं सर्वकामफलप्रदम् ॥
तस्यैव पूर्वखण्डे तु वासुकेस्तीर्थमुत्तमम् ।
तत्र स्नातो वरारोहे रोगैर्नैवाऽभिभूयते ॥

1. P omits three lines below
2. P. बालेश्वर
3. P महामागा

तस्यैव च समीपे तु चन्द्रेण स्थापितं शुभम् ।
चन्द्रेश्वरस्य पूर्वेण लिङ्गं विद्येश्वरं शुभम् ॥
लभेद्वैद्याधरं लोकं तस्य लिङ्गस्य दर्शनात् ।
॥ इति लिङ्गपुराणे तृतीयोऽध्यायः ॥

[तथा—]

देव्युवाच—

कथं वीरेश्वरो देव एतदिच्छामि वेदितुम् ।
कथयस्व प्रसादेन देवदेव महेश्वर ॥

ईश्वर उवाच—

इह आसीत्पुरा राजा नियुक्तिर्नाम विश्रुतः ।
तस्य भार्या महादेवि अरजा नाम विश्रुता ॥
एकः पुत्रस्तया जातः कालेन बहुना तदा ।
पादे द्वितीये सम्भूते मूलनक्षत्रसंज्ञके ॥
मन्त्रिभिश्च तदा देवि उक्ता तत्रेशभामिनी ।
जातोऽयं दारको देवि पापनक्षत्रसंभवः ॥
तस्मात्त्याज्यस्तु बालोऽयं राज्ञा चैव हितार्थिना ।
एवमुक्ता तु सा देवि मन्त्रिभिर्हितकाम्यया ॥
ध्यात्वा चाऽधोमुखी दीना प्रतिपेदे महेश्वरीम् ।
प्रोवाचेदं तदा धात्रीं बालं गृह्णीष्व मा चिरम् ॥
स्वर्लीनस्योत्तरे पार्श्वे मातृभ्यश्च समर्पितम् ।
'रक्षतामिति बालोऽयं मम पुत्र' इति ब्रवीत् ॥
राज्यास्तु वचनं सर्वं कृतं धातृकया तदा ।
मातॄणां हि तदा बालं निक्षेप्तुमुपचक्रमे ॥
कदाचित्कालपर्याये मातृभिः परिचिन्तितम् ।
अस्माकं पुत्रतां प्राप्त एष बालो न संशयः ॥

अस्माभिर्गन्तुमारब्धं खेचरीचक्रमुत्तमम् ।
ब्रह्माणी चाऽब्रवीद्देवि योगपीठं तु नीयताम् ॥
योगपीठेन दृष्टेन बालो राज्यक्षमो भवेत् ।
सर्वाभिर्मातृभिश्चाऽथ तद्वाक्यमभिनन्दितम् ॥
नीतो विद्याधरं लोकं योगपीठं च दर्शितम् ।
आश्वासितो मातृगणैः स्पृष्टः[1] तत्र स बालकः ।
'कथ्यतां पूर्ववृत्तान्तः पुत्र बालकुमारक ॥
कस्य त्वं पूर्णचन्द्राभ कथं प्राप्तोऽसि नो गृहम् ? ॥'
एवमुक्तस्तदा बालो न किंचित्प्रत्यभाषत ।

पञ्चमुद्रोवाच—

यथा राज्यक्षमो बालस्तथा त्वं कर्तुमर्हसि ।
एवं श्रुत्वा तु तत्सर्वा मातरोऽभिमुखाऽभवन् ॥
एवं भविष्यतीत्युक्त्वा तुष्टो वै खेचरीगणः ।
'गच्छ पुत्र स्वयं[2] राज्यं पालयस्व यथासुखम् ॥
बालेन प्रार्थिताः सर्वाः प्रजाकामेन सुन्दरि ॥
यदाऽहं भविता चोर्व्यां सर्वलोकेषु पार्थिवः ।
अवतारस्तदा कार्यो मद्भक्त्या परया तदा ।
एवं वै प्रार्थिताः सर्वा मातरो लोकमातरः ॥
अवतेरुर्यथायोगं कृष्णपक्षे चतुर्दशीम् ।
पञ्चमुद्रा तु बालं तमनयन्नगरं पुनः ॥
आगत्य च यथायोगमर्धरात्रे व्यवस्थितम् ।
अवतेरुस्तदा हृष्टाः पञ्चमुद्रा विमातरः ॥
बालेन पूजिताः सर्वाः प्रतिष्ठाप्य यथाविधि ।
पूजां गृहीत्वा बालस्य आकाशं तु पुनर्गताः ॥

1. P. दृष्टः
2. P. स्वकं

अद्याऽपि दृश्यते व्योम्नि मातॄणां गणमण्डलम् ।
निरीक्ष्यते पुण्यकर्मा उत्तराभिमुखं स्थितम् ॥
यदेतद्दृश्यते व्योम्नि मातॄणां तु समीपतः ।
आकाशलिङ्गमित्युक्तमयं स्वर्लीन उच्यते ॥
यथाऽऽकाशे तथा भूमौ एवं सर्वत्र दृश्यते ।
एवमालोक्य तं सर्वं गमने मातृमण्डलम् ॥
मातॄणां तु प्रभावेण नरो भवति सिद्धिभाक् ।
ततः प्रभृति देवेशि अस्मिन् क्षेत्रे व्यवस्थिता ॥
विपद्धियाऽऽगता यस्माद्विकटा प्रोच्यते बुधैः ।
बालो वीरत्वमापन्नो मत्प्रसादाद्यशस्विनि ॥
बालेन चाऽप्यहं देवि अस्मिन् देशे सुखोषितः ।
॥ इति श्रीलिङ्गपुराणे गुह्यायतनवर्णने चतुर्थोऽध्यायः ॥

ईश्वर उवाच—

वायव्ये तु दिशाभागे तस्य पीठस्य सुन्दरि ।
सगरेण पुरा देवि तस्मिन् देशे प्रतिष्ठितम् ॥
चतुर्मुखं तु तल्लिङ्गं सर्वपापप्रणाशनम् ।
तस्यैवोत्तरपूर्वेण नाम्ना वालीश्वरं शुभम् ॥
वालिना स्थापितं लिङ्गं कपिना सुमहात्मना ।
तं दृष्ट्वा मानवो देवि तिर्यग्योनिं न गच्छति ।
[1]तस्य चोत्तरदिग्भागे सुग्रीवस्य महात्मनः ॥
लिङ्गं तस्य[2] शुभं भद्रे सर्वकिल्बिषनाशनम् ।
तथा हनुमताऽत्रैव स्थापितं लिङ्गमुत्तमम् ॥

1. Folio 12 of Bhonsle Ms. begins here
2. P. तत्र

सगरात्पश्चिमेनैव लिङ्गं तत्र प्रतिष्ठितम् ।
मम भक्त्या च सुश्रोणि अश्विभ्यां परमेश्वरि ॥
तस्यैवोत्तरपार्श्वे तु भद्रदोहमिति स्मृतम् ।
गवां क्षीरेण सञ्जातं सर्वपातकनाशनम् ॥
कपिलानां सहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
तत्फलं लभते मर्त्यः स्नातस्तत्र न संशयः ॥
पूर्वभाद्रपदायुक्ता पौर्णमासी यदा भवेत् ।
तदा पुण्यतमः कालो ह्यश्वमेधफलप्रदः ॥
ह्रदस्य पश्चिमे तीरे भद्रेश्वरमिति स्थितम् ।
तं दृष्ट्वा मानवो भद्रे गोलोकं लभते ध्रुवम् ॥
भद्रेश्वरस्य दिग्भागे नैर्ऋते तु यशस्विनि ।
उपशान्तशिवं नाम ख्यातं सर्वसुरासुरैः ॥
उपशान्तस्य देवस्य उत्तरे वरवर्णिनि ।
चक्रेश्वरमिति ख्यातं सर्वदेवनमस्कृतम् ॥
पश्चिमाभिमुखं देवि ह्रदस्तस्यैव चाऽग्रतः ।
तस्मिन् ह्रदे नरः स्नात्वा [पूजयित्वा[1]] महेश्वरम् ॥
शिवलोकमवाप्नोति भावितेनाऽन्तरात्मना ।
तस्य पश्चिमदिग्भागे शूलेश्वरमिति स्थितम् ॥
शूलयन्त्रं पुरा न्यस्तं स्नानार्थं वरवर्णिनि ।
ह्रदस्तत्र समुत्पन्नो देवदेवस्य चाऽग्रतः ॥
स्नानं कृत्वा ह्रदे तस्मिन् दृष्ट्वा शूलेश्वरं प्रभुम् ।
रुद्रलोकमवाप्नोति त्यक्त्वा संसारसागरम् ॥
शूलेश्वरस्य पूर्वेण अन्यदायतनं शुभम् ।
तप्तं तत्र तपस्तीव्रं नारदेन सुरर्षिणा ॥

1. [ ] Lacuna supplied by P

स्थापितं मम लिङ्गतु कुण्डस्य पुरतः शुभम् ।
तस्मिन् कुण्डे नरः स्नात्वा दृष्ट्वा वै नारदेश्वरम् ॥

[1]संसारमाया या घोरा तां तरेन्नाऽत्र संशयः ।
नारदेशस्य पूर्वेण नाम्ना धर्मेश्वरं शुभम् ॥
स्थापितं मम लिङ्गं तु कुण्डस्य पुरतः शुभे ।
वायव्ये तु दिशाभागे तस्य देवस्य सुन्दरि ॥
विनायकमिति ख्यातं कुण्डं तत्र शुभोदकम् ।
तस्मिन् कुण्डे नरः स्नात्वा दृष्ट्वा चैव विनायकम् ॥
सर्वविघ्नविनिर्मुक्तो ह्यस्मिन् क्षेत्रे वसेच्चिरम् ।
विनायकस्य संलग्न उत्तरेण यशस्विनि ॥
ह्रदस्तत्र सुविख्यातोऽमरको नाम नामतः ।
दक्षिणेन तु कुण्डस्य मुखलिङ्गं तु तिष्ठति ॥
तस्मिन् कुण्डे नरः स्नात्वा दृष्ट्वा [2]चामरकेश्वरम् ।
अज्ञानाच्चैव यत्किञ्चिदिह क्षेत्रे तु यत्कृतम् ॥
विलयं याति तत्सर्वं दृष्ट्वा तल्लिङ्गमुत्तमम् ।
तस्य चोत्तरदिग्भागे नाऽतिदूरे यशस्विनि ॥
वरणायास्तटे शुद्धे लिङ्गं तत्रैव संस्थितम् ।
वरणेश्वरं तु विख्यातं पश्चिमाभिमुखं स्थितम् ॥
तस्मिन् पाशुपतः सिद्ध अश्वपादो यशस्विनि ।
अनेनैव शरीरेण शाश्वतीं सिद्धिमागतः ॥

1. P omits these two ślokas
2. P. चैव विनायकम्

ममाऽपि तत्र सान्निध्यं तस्मिँल्लिङ्गे यशस्विनि।
तेन दृष्टेन सुश्रोणि गन्धर्वत्वं च विन्दति॥
तस्य पश्चिमदिग्भागे नाम्ना शैलेश्वरं शुभम्।
तं दृष्ट्वा मानवो देवि पूर्वोक्तं लभते फलम्॥
दक्षिणे चाऽपि तस्यैव कोटीश्वरमिति स्थितम्।
यत्र सा दृश्यते देवि [1]विश्रुता भीष्मचण्डिका॥
बीभत्सविकृते भीमे श्मशाने वसते सदा।
तेन सा प्रोच्यते देवि विश्रुता भीष्मचण्डिका॥
कोटितीर्थेषु यः स्नात्वा कोटीश्वरमथाऽर्चयेत्।
गवां कोटिप्रदानेन यत्फलं लभते नरः॥
तत्फलं सकलं तस्य स्नानेनैकेन सुन्दरि।
कोटीश्वरस्य पूर्वेण ऋषिसङ्घैः प्रतिष्ठितम्॥
तेन लिङ्गेन दृष्टेन दृष्टं स्यात् सचराचरम्।
॥ इति श्रीलिङ्गपुराणे गुह्यायतनवर्णने पञ्चमोऽध्यायः॥

ईश्वर उवाच—

कोटीश्वरस्य देवस्य आग्नेय्यां दिशि संस्थितः।
श्मशानस्तम्भसंज्ञेति विख्यातः सुप्रतिष्ठितः॥
मानवास्तत्र पात्यन्ते इह यैर्दुष्कृतं कृतम्।
यत्र स्तम्भे सदा देवि अहं तिष्ठामि भामिनि॥
तत्र गत्वा तु यः पूजां मम देवि करिष्यति।
सर्वपापविनिर्मुक्तो गच्छेच्च परमां गतिम्॥

1. B. भीष्मचण्डिकविश्रुता

अन्यच्च ते प्रवक्ष्यामि महातीर्थं यशस्विनि ।
कपालमोचनं नाम त्रिषु लोकेषु विश्रुतम् ॥
कपालं पतितं तत्र स्नातस्य मम सुन्दरि ।
तस्मिन् स्नातो वरारोहे ब्रह्महत्त्यां व्यपोहति ॥
कपालेश्वरनामानं तस्मिंस्तीर्थे व्यवस्थितम् ।
अश्वमेधमवाप्नोति दर्शनात्तस्य सुन्दरि ॥
[1]तस्यैव चोत्तरे पार्श्वे तीर्थं त्रैलोक्यविश्रुतम् ।
तत्र स्नात्वा वरारोहे ऋणैर्मुक्तो भवेन्नरः ॥
ऋणमोचनकं नाम्ना विख्यातं भुवि सुन्दरि ।
त्रीणि लिङ्गानि तिष्ठन्ति तत्रैव मम सुन्दरि ॥
तानि दृष्ट्वा तु सुश्रोणि नश्यति त्रिविधम् ऋणम् ।
दक्षिणे तु दिशाभागे तस्य तीर्थस्य सुन्दरि ॥
अङ्गारेश्वरनामानं मुखलिङ्गं व्यवस्थितम् ।
पश्चिमाभिमुखं देवि कुण्डस्य पुरतः स्थितम् ॥
अङ्गारेण यदा योगश्चतुर्थ्यामष्टमीषु वा ।
तीर्थे तस्मिन्नरः स्नात्वा दृष्ट्वा वै मङ्गलेश्वरम् ॥
व्याधिभिश्च विनिर्मुक्तो यत्र तत्राऽभिजायते ।
तस्यैव च समीपस्थमुत्तरेण यशस्विनि ॥
लिङ्गं तु सुमहत् पुण्यं विश्वकर्मप्रतिष्ठितम् ।
पश्चिमाभिमुखं दृष्ट्वा सर्वज्ञत्वमवाप्नुयाम् ॥
बुधेश्वरं तु तत्रैव दृष्ट्वा भक्त्या दृढव्रतः ।
सर्वान् कामानवाप्नोति दृष्ट्वा देवं बुधेश्वरम् ॥

1. B omits this line and the next two lines

बुधेश्वराद्दक्षिणतो लिङ्गं चैव चतुर्मुखम् ।
महामुण्डेश्वरं नाम सर्वसिद्धिप्रदायकम् ॥
तस्य देवस्य पुरतः कूपस्तिष्ठति वै शुभः ।
तस्य कूपस्य सा देवी उपरिष्टात् स्थिता शुभा ॥
स्नानार्थं तत्र सा क्षिप्ता माला मुण्डमयी मया[1] ।
तेन संप्रोच्यते देवि महामुण्डेति मानवैः ॥
खट्वाङ्गं[2] तत्र वै क्षिप्तं स्नानार्थं वरवर्णिनि ।
खट्वाङ्गेश्वर[3]नाम्ना तु स्थितं तत्रैव सुव्रते ॥
भुवनेश्वरनाम्ना तु लिङ्गं देवि फलप्रदम् ।
उत्तराभिमुखं लिङ्गं कुण्डाद्वै दक्षिणे तटे ॥
तस्मिन् कुण्डे नरः स्नात्वा दृष्ट्वा वै भुवनेश्वरम् ।
न दुर्गतिमवाप्नोति कल्मषैश्च विमुच्यते ॥
दक्षिणे भुवनेशस्य कुण्डमन्यच्च तिष्ठति ।
नाम्ना विमलमीशं च लिङ्गं तस्यैव पूर्वतः ॥
वैमल्यं तु नरा यान्ति तस्य लिङ्गस्य दर्शनात् ।
तत्र स्नात्वा वारारोहे मोदते दिवि दैवतैः ॥
तस्मिन् पाशुपतः सिद्धस्त्र्यम्बको नाम वै मुनिः ।
अनेनैव शरीरेण रुद्रलोकमवाप्नुयात् (?) ॥
तस्याऽङ्गारककुण्डस्य पश्चिमेन यशस्विनि ।
महदायतनं पुण्यं भृगुणा स्थापितं पुरा ॥

1. B. श्रीवामुण्डमयी शुभा
2. B. शृङ्गाङ्गम्
3. B. शृङ्गाङ्गश्वेर

यस्तदायतनं दृष्ट्वा अर्चितं स्तुतिपूर्वकम् ।
शिवलोकाच्च ते पुण्यान्न च्यवन्ति कदाचन ॥
दक्षिणेन तु तस्यैव अन्यदायतनं शुभम् ।
नन्दीशेश्वरनामानं देवानामपि दुर्लभम् ॥
तस्य दर्शनमात्रेण व्रतं पाशुपतं लभेत् ।
तत्र सिद्धो महात्मा वै कपिलर्षिर्महातपाः ॥
त्रिकालमार्चयद्देवं गुहाशायी यतात्मवान् ।
एवं वर्षसहस्रेण तस्य तुष्टोऽस्म्यहं प्रिये ॥
मम देवि प्रसादेन साङ्ख्यवेत्ता महायशाः ।
कपिलेश्वरस्याऽधस्ताद्गुहा तत्रैव संस्थिता ॥
तां गुहां वीक्षते यो वै न स पापेन लिप्यते ।

देव्युवाच—

कपिलेश्वरं कथं देवमोङ्कारेश्वरसंज्ञितम् ।
कथयस्व प्रसादेन देवदेवं महेश्वरम् ॥

ईश्वर उवाच—

त्रीणि लिङ्गानि गुह्यानि वाराणस्यां मम प्रिये ।
येषां चैव तु सान्निध्यं मम चैव सुरेश्वरि ॥
एवं चाऽन्यप्रकारेण ब्रह्मविष्णुमहेश्वराः ।
क्रमान्मात्रा समुद्दिष्टा नन्दीशस्य तु सुन्दरि ॥
अकारे च स्थितो विष्णुः पञ्चायतनसंस्थितः ।
उकारो ब्रह्मणो रूपं तस्य दक्षिणतः प्रिये ॥
नन्दीशेश्वरनामाऽहमुत्तरेण व्यवस्थितः ।
तं च देवि तदोङ्कारं मम रूपं सुरेश्वरि ॥

मानवानां हितार्थाय तत्र स्थाने स्थितो ह्यहम् ।
मत्स्योदर्यास्तु कूलेऽहमुत्तरे चोत्तरे प्रिये ॥
नन्दीशेश्वरनामाऽहमुत्तरेण व्यवस्थितः ।
नन्दीशं परमं ब्रह्म नन्दीशं परमा गतिः ॥
नन्दीशं परमं स्थानं दुःखसंसारमोचनम् ।
अप्रकाश्यमिदं कान्ते तव स्नेहात् प्रकाशितम् ॥
अन्यथा गोपनीयं तु मम भक्तिविवर्जिते ।
युगे सप्तदशे देवि कृत्वा चैकां वसुन्धराम् ॥
संहारं तु तपः कृत्वा अस्मिन् देशे समागतः ।
ओङ्कारमूर्तिमास्थाय त्रिभेदेन स्थितो ह्यहम् ॥
सर्वेषामेव सिद्धानां तत् स्थानं परिकीर्तितम् ।
तस्मिँल्लिङ्गे शिवः साक्षात् स्वयमेव व्यवस्थितः ॥
पूर्वामुखं तु तं देवं सिद्धसङ्घैः प्रपूजितम् ॥
ओङ्कारेश्वरनामानं देवानामपि दुर्लभम् ।
वामदेवस्तु सावर्णिरघोरः कपिलस्तथा ।
तत्र सिद्धिं परां प्राप्ता योगे पाशुपते स्थिताः ॥
अन्ये च ऋषयो देवा यक्षगन्धर्वगुह्यकाः ।
युगे युगे गमिष्यन्ति तस्मिन् स्थाने स्थितः सदा ॥
दिव्या हि सा परा मूर्तिः कपिलेश्वरसंज्ञिता ।
कदाचिदस्य देवस्य दर्शने जाह्नवी प्रिये ॥
मत्स्योदरीं समायाति तत्र स्नानं तु मोक्षदम् ।
आराध्य कपिलेशं तु त्रैलोक्यपालनक्षमाः ॥
भवन्ति पुरुषा देवि मम नित्यं च वल्लभाः ।
ओङ्कारं तत्परं ब्रह्म सकलं निष्कलं स्थितम् ॥
रुद्रलोकस्य तद्द्वारं रहस्यं परिकीर्तितम् ।
कपिलेश्वरस्याऽधस्ताद्दक्षिणे वरवर्णिनि ॥

मत्स्योदरीं समेष्यन्ति तीर्थानि सह सागरैः।
षष्टिकोटिसहस्राणि षष्टिकोटिशतानि च ॥
पक्षे पक्षे समेष्यन्ति चतुर्दश्यष्टमीषु च।
मत्स्योदर्यां यदा गङ्गा पश्चिमे कपिलेश्वरे ॥
समायाति महादेवि स च योगः सुदुर्लभः।
तस्मिन् स्नानं महाभागे अश्वमेधसहस्रदम् ॥
तस्य लिङ्गस्य माहात्म्यं कपिलेशस्य कीर्तितम्।
न कस्यचिददेयं गोपनीयं प्रयत्नतः ॥
तत्रैव अक्षरं ब्रह्म नादेयं परिकीर्तितम्।

॥ इति श्रीलिङ्गपुराणे कपिलेश्वरमाहात्म्ये ओङ्कार-
निर्णयो नाम षष्ठोऽध्यायः॥

ईश्वर उवाच—

तत्र स्थाने तु ये सिद्धास्तान् प्रवक्ष्याम्यहं पुनः।
महापाशुपता श्रेष्ठा मम पुत्रा महौजसः ॥
अनन्यमनसः शुद्धाः सेवितोऽहं पुरा सदा।
शीतातपविनिर्मुक्तं प्रासादैरुपशोभितम् ॥
कैलासपृष्ठे देवस्य यादृग्देवि गृहं शुभम्।
तदभ्यधिकरूपं तु कृत्वा देवस्य मन्दिरम् ॥
सेव्यते सिद्धतुल्यैस्तु सर्वसिद्धानुकम्पिपभिः।
तदा सिद्धिरनुप्राप्ता निर्वाणाया गतिः पुरा ॥
कपिलेश्वरस्य चैवाऽग्रे लिङ्गं पश्चान्मुखं स्मृतम्।
उद्दालक ऋषिस्तत्र सिद्धिं परमिकां गतः ॥
अन्यत् पश्चान्मुखं लिङ्गं स्थितं तत्र तथोत्तरे।
तस्मिँल्लिङ्गे तु संसिद्धः पाराशर्यो महामुनिः ॥

अन्यत्तत्रैव संलग्नं स्थितं पश्चान्मुखं शुभम् ।
तस्मिन्नायतने सिद्धो महाज्ञानी हि बाष्कलिः ॥
तस्यैव तु समीपस्थं स्थितं पूर्वामुखं प्रिये ।
तत्र पाशुपतः सिद्धो भाववृत्तस्तु वै मुनिः ॥
तस्यैव पश्चिमे देवि मुखलिङ्गं तु तिष्ठति ।
तत्र सिद्धिं परां प्राप्त अरुणिर्नाम नामतः ॥
पश्चिमे अरुणीशस्य अन्यल्लिङ्गं तु तिष्ठति ।
अस्मिन् पाशुपताचार्यो योगसिद्धो महामुनिः ॥
अन्यत्तत्रैव संलग्नं दक्षिणे लिङ्गमुत्तमम् ।
तत्र सिद्धिं गतो देवि कौस्तुभो नाम वै ऋषिः ॥
तस्य दक्षिणपार्श्वे तु लिङ्गं पूर्वामुखं स्थितम् ।
महापाशुपतः सिद्धः सावर्णिस्तत्र वै मुनिः ॥
तस्याऽग्रे तु महल्लिगं स्थितं पूर्वामुखं शुभम् ।
अस्मिँल्लिङ्गे शिवः साक्षात् स्वयमेव व्यवस्थितः ॥
ओङ्कारमूर्तिमास्थाय स्थितोऽहं तत्र सुव्रते ।
चत्वारो मुनयः सिद्धास्तस्मिँल्लिङ्गे यशस्विनि ॥
वामदेवस्तु सावर्णिरघोरः कपिलस्तथा ।
तस्मिँल्लिङ्गे तु संसिद्धा नन्दीशस्य प्रभावतः ॥
तस्य देवस्य चाऽधस्तादूगुहा सिद्धैस्तु वन्दिता ।
श्रीमुखी नाम सा ज्ञेया योगसिद्धैस्तु सेविता ॥
तत्र पाशुपताः श्रेष्ठा मम लिङ्गार्चने रताः ।
तेषां चैव निवासार्थं सा गुहा निर्मिता मया ॥
तस्य द्वारे तु सुश्रोणि सिद्ध अघोरो महामुनिः ।
अनेनैव शरीरेण रुद्रत्वं गतवान् मुनिः ॥

तत्र गत्वा त्रिरात्रं तु क्षपयेदेकमानसः ।
नरो वा यदि वा नारी संसारं न विशेत् पुनः ॥
अघोरेश्वरदेवस्य चोत्तरे कूपमुत्तमम् ।
तस्योपस्पर्शनाद्देवि वाजपेयं च विन्दति ॥
॥ इति श्रीलिङ्गपुराणे गुह्यायतनवर्णनं नाम सप्तमोऽध्यायः ॥

ईश्वर उवाच—

अन्यदायतनं वक्ष्ये वाराणस्यां सुरेश्वरि ।
यत्र साक्षात्स्वयं भद्रे रममाणं तु सर्वदा ॥
मत्स्योदरीतटे रम्ये सुरसिद्धनमस्कृते ।
रोचते मे सदा वासस्तस्मिन्नायतने शुभे ॥
स्थानानामेव सर्वेषामतिरम्यं मम प्रियम् ।
यत्र पाशुपता देवि मम लिङ्गार्चने रताः ॥
मम पुत्रास्तु ते सर्वे ब्रह्मचर्येण संयुताः ।
शान्ता दान्ता जितक्रोधा सिद्धास्तत्र न संशयः ॥
लोभादिविषयासक्तो नरकाच्च निवर्तते ।
मम लिङ्गानि पुण्यानि पूजयन्ति सदाऽत्र ये ॥
तेषां मध्ये तु तत्रैव लिङ्गं वै पश्चिमामुखम् ।
श्रीकण्ठनामविख्यातं कपिलेश्वरदक्षिणे ॥
तस्मिन् पाशुपतः सिद्धः क्रतुध्वज इति स्मृतः ।
मम चैव प्रसादेन योगैश्वर्यमवाप्नुयात् ॥
तस्यैव चाऽग्रतो भद्रे लिङ्गं पूर्वमुखं स्थितम् ।
तस्मिँल्लिङ्गे तु जाबालः सिद्धिं परमिकां गतः ॥
अपरं चैव लिङ्गं तु तस्य दक्षिणतः स्थितम् ।
ओङ्कारेश्वरनामानं देवानामपि दुर्लभम् ॥

तत्र सिद्धिं परां प्राप्तो मुनिः कालिकवृक्षियः ।
सर्वेषामेव सिद्धानामुत्तमोत्तमसंस्थितः ॥
तस्यैव दक्षिणे भद्रे लिङ्गं पश्चान्मुखं स्थितम् ।
तस्मिँल्लिङ्गे तु संसिद्धो गार्ग्यश्च सुमहातपाः ॥
पञ्चायतनमेतं ते मया च कथितं शुभे ।
न कस्यचिन्मयाऽऽख्यातं रहस्यं परमाद्भुतम् ॥
पञ्चब्रह्मेति विख्यातमेतदद्याऽपि सुन्दरि ।
एतस्मात्कारणाद्देवि पञ्चायतनमुच्यते ॥
चतुराश्रमिणां पुण्यं यत्फलं प्रतिपद्यते ।
तत्फलं सकलं प्रोक्तं पञ्चायतनदर्शनात् ॥
इदं पाशुपतं श्रेष्ठं मदीयव्रतचारिणाम् ।
योगिनां मोक्षलिप्सूनां संसारभयनाशनम् ॥
नराणामल्पबुद्धीनां पापोपहतचेतसाम् ।
भेषजं परमं प्रोक्तं पञ्चायतनमुत्तमम् ॥
तस्माद्यत्नं सदा कुर्यात्पञ्चायतनदर्शने ।
पञ्चायतनसामीप्ये कूपस्तिष्ठति सुन्दरि ॥
तस्मिन् कूप उपस्पृश्य दीक्षाफलमवाप्नुयात् ।
तस्मिन् दक्षिणदिग्भागे रुद्रवासः प्रकीर्तितः ॥
रुद्रस्योत्तरपार्श्वे तु पञ्चायतनदक्षिणे ।
तत्र कुण्डं महत् प्रोक्तं महापातकनाशनम् ॥
तस्मिन् कुण्डे नरः स्नात्वा अभीष्टं फलमाप्नुयात् ।
चतुर्दश्यां यदा योग आर्द्रानक्षत्रसंयुतः ॥
तदा पुण्यतमः कालस्तस्मिन् स्नाने महाफलम् ।
तस्मिंस्तीर्थे नरः स्नात्वा दृष्ट्वा रुद्रं च भामिनि ॥
यत्र तत्र मृतो देवि रुद्रलोकं तु गच्छति ।
पूर्वामुखस्थितश्चाऽहं तस्मिँल्लिङ्गे महेश्वरि ॥

[1]रुद्राणां कोटिजप्येन यत्फलं प्रतिपद्यते ।
तत्फलं लभते भद्रे तस्य लिङ्गस्य दर्शनात् ॥
रुद्रस्य च समीपे तु ऋषिभिः स्थापितानि च ।
लिङ्गानि मम सुश्रोणि सर्वकामफलानि च ॥
रुद्रस्य नैर्ऋते भागे महालयमिति स्मृतम् ।
दर्शनाच्च पदं तस्य महाभाग्यस्य सुन्दरि ॥
तत्र स्थाने शुभे रम्ये स्वयं तिष्ठति पार्वती ।
तस्यैव चाऽग्रतो देवि कूपस्तिष्ठति निर्मलम् ॥
पितरस्तत्र तिष्ठन्ति ये दिव्या ये च मानुषाः ।
तस्मिन् कूप उपस्पृश्य जलं संगृह्य भामिनि ॥
पिण्डस्तत्र प्रदातव्यो मम देवि पदस्पृहः ।
श्राद्धं तत्र प्रकुर्वीत अन्नाद्येनोदकेन च ॥
पिण्डः कूपे तु तत्रैव प्रक्षेप्तव्यः शुभानने ।
एवं कृत्वा तु यस्तस्मिंस्तीर्थे रुद्रमहालये ॥
एकविंशकुलोपेतो रुद्रलोकं स गच्छति ।
तत्र वैतरणी नाम दीर्घिका पश्चिमामुखी[2] ॥
तस्यां स्नात्वा वरारोहे नरकं न च पश्यति ।
खण्डस्फुटितसंस्कारं यस्तत्र कुरुते शुभे ॥
रुद्रलोकोऽक्षयस्तस्य सर्वकालं यशस्विनि ।
महालयस्योत्तरेण लिङ्गानि सुमहान्ति च ॥
देवैः सर्वैर्महाभागैः स्थापितानि शुभार्थिभिः ।
पश्चिमे तु दिशाभागे रुद्रकुण्डस्य भामिनि ॥
[3]लिङ्गं तत्र स्थितं शुभ्रं देवाचार्यप्रतिष्ठितम् ।
बृहस्पतीश्वरं नाम सर्वदुःखविनाशनम् ॥

1. B. रुद्रायतनजप्येन
2. B. दक्षिणामुखी
3. B omits two lines from here upto पितृभिः स्थापितं लिङ्गम्

पितृभिः स्थापितं लिङ्गं तटे कूपस्य दक्षिणे ।
तेन पूजितमात्रेण पितरस्तृप्तिमाप्नुयुः ॥
॥ इति श्रीलिङ्गपुराणे गुह्यायतनवर्णनेऽष्टमोऽध्यायः ॥

ईश्वर उवाच—

अन्यदायतनं श्रेष्ठं कालिपुर्यां सुरेश्वरि ।
दक्षिणेन स्थितं देवं रुद्रवासस्य सुन्दरि ॥
कामेश्वरमिति ख्यातं सर्वकामफलप्रदम् ।
तप्तं तत्र तपस्तीव्रं कामदेवेन वै पुरा ॥
कुण्डं तदुद्भवं देवि पद्मोत्पलसमन्वितम् ।
कुण्डस्यैव तटे रम्ये उत्तमे वरवर्णिनि ॥
लिङ्गं तत्र स्थितं दिव्यं पश्चिमाभिमुखं प्रिये ।
गन्धधूपनमस्कारैर्मुखवाद्यैश्च सर्वशः ।
यो मामर्चयते तत्र तस्य तुष्याम्यहं [सदा] ॥
तुष्टे तु मयि देवेशि सर्वान् कामाँल्लभेत सः ।
ततः प्रभृति वै तस्मिन्नन्येऽपि सुरपुङ्गवाः ।
आराधयन्तो मां तस्मिंस्तीर्थे वक्तुं महातपाः ॥
यस्य यस्य यदा कामस्तत्र तं तं ददाम्यहम्[1] ।
ददामि सर्वकामांश्च धर्मं मोक्षं तथैव च ॥
तस्मादन्येऽपि ये केचित्तीर्थे तस्मिन् जनाः स्थिताः ।
आराधयन्ते देवेशं कामेशं चैव सर्वदा ॥
यो यस्य मनसः कामः तं तमाप्नोति निश्चितम् ।
कामेश्वरसमीपे तु दक्षिणे वरवर्णिनि ॥
तत्र स्नात्वा वरारोहे रुद्रस्याऽनुचरो भवेत् ।
चैत्रे मासि सिते पक्षे त्रयोदश्यां तु मानवः ॥

1. B. वसाम्यहम्

स्नानं ये च प्रकुर्वन्ति ते कामसदृशा नराः ।
कामेश्वरं सदा लिङ्गं योऽर्चयतीह मानवः ॥
लभेद्विद्याधरं लोकमेवमेव न संशयः ।
कामेश्वरस्य पूर्वेण नाम्ना पञ्चालकेश्वरम् ॥
धनदस्य तु पुत्रेण पूजितोऽहं सुरेश्वरि ।
क्षेत्रं मम प्रियं ज्ञात्वा तस्मिन् देशे व्यवस्थितः ॥
आराधयति मां नित्यं मम पूजारतः सदा ।
पञ्चालेश्वरनामाऽहं तस्मिन् देशे व्यवस्थितः ॥
नराणां धनदानं तु करिष्यामि यशस्विनि ।
तत्र पूर्वमुखं देवि मुखलिङ्गं तु तिष्ठति ॥
पञ्चकेश्वरनामाऽहं तत्र देवि प्रतिष्ठितः ।
कूपस्तस्यैव चाऽग्रे तु पावनः सर्वदेहिनाम् ॥
तस्मिन् स्थाने स्थिता देवि अघोरेशेति नामतः ।
मानवानां हितार्थाय स्वयं तत्र व्यवस्थिता ॥
नव लिङ्गानि गुह्यानि स्थापितानि तु किन्नरैः ।
पञ्चकेश्वरपूर्वेण दिवाकरनिशाकरौ ॥
लिङ्गानि तानि पुण्यानि सर्वपापहराणि च ।
दक्षिणेन तु तस्यैव अन्धकेशेति नामतः ॥
तत्र लिङ्गं महत्पुण्यमन्धकेन प्रतिष्ठितम् ।
मम चैव प्रसादेन गतोऽसौ परमां गतिम् ॥
पश्चिमे तु दिशाभागे तस्य देवस्य सुन्दरि ।
नाम्ना देवेश्वरं लिङ्गं[1] कामकुण्डस्य दक्षिणे ॥

1. B. पुण्यं

अहमेव सदा भद्रे तस्मिन् स्थाने व्यवस्थितः ।
भीष्मेश्वरं तु तत्रैव सिद्धेश्वरमतः परम् ॥
गङ्गेश्वरं तु तत्रैव यमुनेश्वरमेव च ।
मण्डलेश्वरं तु तत्रैव ऊर्वशीलिङ्गमुत्तमम् ॥
अन्यानि तत्र लिङ्गानि स्थापितानि महात्मभिः ।
तानि दृष्ट्वा तु मनुजः सर्वयज्ञफलं लभेत् ॥
मण्डलेश्वरसामीप्ये मुखलिङ्गं च तिष्ठति ।
शान्तेन स्थापितं लिङ्गं सर्वपापहरं शुभम् ॥
वायव्ये तु दिशाभागे द्रोणेश्वरसमीपतः ।
वालखिल्येश्वरं नाम सुखदं सर्वदेहिनाम् ॥
तच्च पश्चान्मुखं लिङ्गं कामकुण्डस्य पश्चिमे ।
वालखिल्येश्वरं दृष्ट्वा सर्वयज्ञफलं लभेत् ॥
तस्यैव चाऽग्रतो भद्रे मुखलिङ्गं च तिष्ठति ।
वाल्मीकेश्वरनामानं तं च दृष्ट्वा न शोचति ॥
तस्यैव कामकुण्डस्य पुरा संस्थापितं तटे ।
लिङ्गं तत्र महापुण्यं च्यवनेन प्रतिष्ठितम् ॥
तस्य दर्शनमात्रेण ज्ञानवान् जायते नरः ।
वालखिल्येश्वरस्यैव दक्षिणे वरवर्णिनि ॥
नाम्ना वातेश्वरं देवं सर्वपातकनाशनम् ।
तं दृष्ट्वा मानवो देवि वायुलोकं च गच्छति ॥
अग्नीश्वरं तु तत्रैव भरतेशं तथैव च ।
वरुणेशं तथा चैव सर्वसिद्धिप्रदायकम् ॥
एतान् दृष्ट्वा महादेवि यथेष्टां गतिमाप्नुयात् ।
अन्यदायतनं पुण्यं सनकेन प्रतिष्ठितम् ॥

सनकेश्वरनामानं सर्वसिद्धामरार्चितम् ।
तेन दृष्टेन देवेशि राजसूयफलं लभेत् ॥
धर्मेश्वरं तु तत्रैव दक्षिणे वरवर्णिनि ।
नाम्ना धर्मेश्वरं देवं सर्वकामफलप्रदम् ॥
अन्यत्तत्रैव लिङ्गं तु ऋषिभिः स्थापितं पुरा ।
सनकेश्वरस्योत्तरतो नाम्ना गरुडकेश्वरम् ॥
सिद्धिकामेन सुश्रोणि स्थापितं गरुडेन तु ।
गरुडेश्वरस्य पुरतः स्थापितं ब्रह्मसूनुना ॥
भक्त्या सनत्कुमारेण स्थापितोऽहं वरानने ।
तेन दृष्टेन देवेशि ज्ञानवान् जायते नरः ॥
तस्यैव चोत्तरे पार्श्वे सनन्देन प्रतिष्ठितम् ।
तस्य दर्शनमात्रेण प्राप्यते सिद्धिरुत्तमा ॥
तस्यैव दक्षिणे पार्श्वे स्थापितं ह्यासुरीश्वरम्[1] ।
तथैव पञ्चशिखिना स्थापितं च महात्मना ॥
तस्य दक्षिणपार्श्वे तु नाऽतिदूरे व्यवस्थितम् ।
शनैश्चरेण तत्रैव मुखलिङ्गं प्रतिष्ठितम् ॥
शनैश्चरेश्वरं नाम सर्वलोकनमस्कृतम् ।
तं दृष्ट्वा मानवो देवि रोगैर्नैवाऽभिभूयते ॥
अन्यच्चैव महापुण्यं काशीपुर्यां महाशये ।
मार्कण्डेयस्तु विख्यातो मम चैव सदा प्रियः ॥
तस्य लिङ्गस्य चाऽग्रे तु पश्चिमेन यशस्विनि ।
मार्कण्डेयह्रदो नाम त्रिषु लोकेषु विश्रुतः ॥

1. P. ह्यवरीश्वरम्

मार्कण्डेयह्रदे स्नात्वा किं भूयः परिशोचति ।
स्नानं दानं जपो होमः श्राद्धं च पितृतर्पणम् ॥
तत्सर्वमक्षयं तत्र भवतीति न संशयः ।
तस्मिन् कुण्डे नरः स्नात्वा दृष्ट्वा चैव चतुर्मुखम् ॥
रुद्रलोकः सदा तस्य पुनरावृत्तिदुर्लभः ।
मार्कण्डेश्वरसामीप्ये उत्तरेण यशस्विनि ॥
कूपो वै तिष्ठते तत्र सर्वतीर्थवरोऽनघे ।
कूपस्य चोत्तरेणैव कुण्डमध्ये यशस्विनि ॥
कुण्डेश्वरमिति ख्यातं सर्वसिद्धैस्तु वन्दितम् ।
दीक्षां पाशुपतीं तीर्त्वा द्वादशाक्षरेण यत्फलम् ॥
तत्फलं लभते देवि ब्राह्मणस्तु न संशयः ।
कुण्डस्य पश्चिमे तीरे लिङ्गं पश्चान्मुखं स्थितम् ॥
स्कन्देन स्थापितं देवि ब्रह्मलोकगतिप्रदम् ।
मार्कण्डेयस्य पूर्वेण नाऽतिदूरे व्यवस्थितम् ॥
शाण्डिल्येश्वरनामानं[1] स्थितं तत्रैव सुन्दरि ।
मुखलिङ्गं तु तं भद्रे पश्चिमाभिमुखं स्थितम् ॥
[2]तं दृष्ट्वा मानवो देवि पशुपाशैः प्रमुच्यते ।
अस्यैव दक्षिणे पार्श्वे नाम्ना भद्रेश्वरं स्मृतम् ॥
तत्र पश्चान्मुखं लिङ्गं स्थापितं च ब्रह्मर्षिभिः ।
तेन दृष्टेन सुश्रोणि ब्राह्मण्यं लभते नरः ॥
अन्यच्चैव महादेवि प्रवक्ष्याम्यनुपूर्वशः ।
यो वै पूर्वं मया तुभ्यं कपालीशः[3] प्रवर्तितः ॥

1. P. शाण्डिलेश्वरनामानं
2. B omits this line and the next
3. P. कपालेशः

तस्य दक्षिणदिग्भागे लिङ्गानि कथयाम्यहम् ।
तत्र देवी स्वयं देवी श्रीर्वै तिष्ठति सर्वदा ॥
[1]श्रीकुण्डमिति विख्यातं तत्र कुण्डे वरानने ।
तस्मिन् कुण्डेश्वरी देवी वरदा सर्वदेहिनाम् ॥
तत्र कुण्डे नरः स्नात्वा दृष्ट्वा देवीं महाश्रियम् ।
श्रिया न रहितः सो वै यत्र तत्राऽभिजायते ॥
श्रियश्चोत्तरपार्श्वे तु कपालीशस्य दक्षिणे ।
तत्र लिङ्गं महाभागे महालक्ष्म्या प्रतिष्ठितम् ॥
पूर्वाभिमुखोऽहं तस्मिन् कुण्डस्यैव तु दक्षिणे ।
स्नात्वा कुण्डे तु वै देवि तल्लिङ्गं ह्यर्चयिष्यति ॥
नरो वा यदि वा नारी तस्य पुण्यफलं शृणु ।
चामरासक्तहस्ताभिः स्त्रीभिः परिवृतस्सदा ॥
तिष्ठते सुविमानस्थो यावदाभूतसंप्लवम् ।
इह लोके यदा याति लक्ष्मीवान् रूपसंयुतः ॥
धनधान्यसमायुक्तः कुले महति जायते ।
स्वर्गलोकस्य तद्द्वारं रहस्यं देवनिर्मितम् ॥
यदा मत्स्योदरीं यान्ति देवलोकाद्दिवौकसः ।
तदा तेनैव मार्गेण स्त्रीभिः परिवृतः सुखम् ॥
तेन सा प्रोच्यते देवि महाश्रीर्वरवर्णिनि ।
एतत्तुभ्यं मया देवि रहस्यं परिकीर्तितम् ॥
तस्य विष्णुध्रुवस्यैव पश्चिमाया दिशः स्थितम् ।
स्थापितं मम लिङ्गं तु दधीचेन महर्षिणा ॥

1. Now known as लक्ष्मीकुण्ड

दधीचेश्वरनामानं ख्यातं सर्वसुरासुरैः ।
तं दृष्ट्वा मनुजो देवि ऐश्वरं लोकमाप्नुयात् ॥
दक्षिणे तु तदा तत्र गायत्र्या स्थापितं पुरा ।
गायत्र्या दक्षिणे चैव सावित्र्या स्थापितं पुनः ॥
एतौ पश्चान्मुखौ लिङ्गौ मम देवि प्रियौ सदा ।
अस्य चैव तु पूर्वेण लिङ्गं पूर्वामुखं स्थितम् ॥
मत्स्योदरीतटे रम्ये स्थितं सत्पतयेश्वरम्[1] ।
तेन दृष्टेन सुश्रोणि[2] उत्तमां सिद्धिमाप्नुयात् ॥
लक्ष्मीलिङ्गस्य देवेन लिङ्गं पश्चान्मुखं स्थितम् ।
उग्रेश्वरे महत्पुण्यं सर्वपापप्रणाशनम् ॥
तेन दृष्टेन सुश्रोणि भवेज्जातिस्मरो नरः ।
तस्यैव दक्षिणे देवि महत्कुण्डं व्यवस्थितम् ॥
स्नात्वा कनखले यद्वत्पुण्यमुक्तं यशस्विनि ।
तस्मिन् कुण्डे नरः स्नात्वा फलमाप्नोति तत्समम् ॥
दधीचेशात्पश्चिमतो नाम्ना तु धनदेश्वरम् ।
यत्र देवि तपस्तप्तं धनदेन महात्मना ॥
तत्र कुण्डं महादेवि धनदेशस्य धीमतः ।
तत्र स्नात्वा नरो देवि धनदेशं च पश्यति ॥
तस्य तुष्टः कुबेरस्तु देवत्वं संप्रयच्छति ।
अन्यानि तत्र लिङ्गानि स्थापितानि सुरासुरैः ॥
तानि दृष्ट्वाऽतिपुण्यानि स्वर्गलोकं व्रजेन्नरः ।
धनदेशात् पश्चिमतो नाम्ना तु करवीरकम् ॥

1. P. तस्य तटेश्वरम् B. तस्य नदेश्वरम्
2. P. देवेशि

तेन दृष्टेन देवेशि सिद्धिं प्राप्नोति मानवः ।
पुण्यानि तत्र लिङ्गानि स्थितानि परमेश्वरि ॥
तस्य वायव्यकोणे तु लिङ्गं पश्चान्मुखं स्थितम् ।
मारीचेश्वरनामानं सर्वपातकनाशनम् ॥
तस्य चैवाऽग्रतो देवि स्थापितं कुण्डमुत्तमम् ।
तत्र स्नात्वा नरो भक्त्या भ्राजते भास्करो यथा ॥
मारीचेशात्पश्चिमतो लिङ्गमिन्द्रेश्वरं महत् ।
पश्चिमाभिमुखं देवि कुण्डस्य तटसंस्थितम् ॥
इन्द्रेश्वराद्दक्षिणतो वापी कर्कोटकस्य च ।
तत्र वीरजले स्नात्वा दृष्ट्वा कर्कोटकेश्वरम् ॥
नागानां चाऽऽधिपत्यं तु जायते नाऽत्र संशयः ।
कर्कोटकाद्दक्षिणतो[1] नातिदूरे व्यवस्थितम् ॥
दृमिचण्डेश्वरं नाम ब्रह्महत्त्यापहारकम् ।
तत्र पाशुपतः सिद्धः कौथुमिर्नाम नामतः[2] ॥
ज्ञानं पाशुपतं प्राप्य रुद्रलोकमितो गतः[3] ।
पश्चिमाभिमुखं लिङ्गं कुण्डस्योत्तरतः स्थितम् ॥
तत्र कुण्डे नरः स्नात्वा दृमिचण्डेश्वरस्य तु ।
रुद्रलोकमवाप्नोति त्यक्त्वा संसारसागरम् ॥
तस्य पूर्वेण देवेशि दीर्घिकायास्तटे शुभे ।
अग्नीश्वरं तु नामानं सर्वपापक्षयङ्करम् ॥
तं दृष्ट्वा मानवो देवि अग्निलोकं तु गच्छति ।
तस्यैव पूर्वदिग्भागे नाम्ना ह्याम्नातकेश्वरम् ॥

1. P. and B. पश्चिमतः
2. B. वायुपुरो नाम नामतः
3. P. नरः

तं दृष्ट्वा मनुजो भद्रे रुद्रस्याऽनुचरो भवेत् ।
एकलिङ्गं तु तद्विद्यात् सूक्ष्मं च वरवर्णिनि ॥
तस्यैवाऽऽम्नातकेशस्य दक्षिणे नाऽतिदूरतः ।
कुण्डं तदुद्भवं दिव्यं सुरलोकप्रदायकम् ॥
उर्वशीश्वरनामानं स्थितं पश्चान्मुखं भुवि ।
तं दृष्ट्वा मनुजो देवि गणत्वं लभते ध्रुवम् ॥
कुण्डस्य नैर्ऋते भागे नाऽतिदूरे कथञ्चन ।
उर्वशीशसमीपे[1] तु तालकर्णेश्वरं स्मृतम् ॥
तं दृष्ट्वा मानवो देवि चण्डस्यैति सलोकताम् ।
तस्यैव तु समीपे तु लिङ्गानि स्थापितानि च ॥
गणैस्तु मम धर्मज्ञैः श्रेष्ठानि सुमहान्ति च ।
तस्य पूर्वेण कूपस्तु तिष्ठते सुमहान्[2] प्रिये ॥
तस्मिन् कूपे जलं स्पृश्य पूतो भवति मानवः ।
चण्डेश्वरस्य पूर्वं तु[3] स्थितं चित्रेश्वरं शुभम् ॥
तेन दृष्टेन देवेशि चित्रस्य समतां व्रजेत् ।
चित्रेश्वरसमीपे तु स्थितं कालेश्वरं महत् ॥
तेन दृष्टेन देवेशि कालं वञ्चति[4] मानवः ।

देव्युवाच—

कथं कालेश्वरो देवः केन वा वञ्चितः प्रभुः ।
कस्मिन् स्थाने तु कः सिद्धस्तन्मे ब्रूहि सुरेश्वर ॥

1. P. सामीप्ये
2. P. सुमहत्
3. P. पूर्वेण
4. P. and B. मुञ्चति

ईश्वर उवाच—

तस्मिन् स्थाने पुरा भद्रे पिङ्गाक्षो[1] नाम वै मुनिः ।
ज्ञानस्य वक्ता पञ्चार्थे लोके पाशुपतः[2] स्थितः ॥
तेन चैव पुरा भद्रे लिङ्गेऽस्मिन् स प्रसादितः[3] ।
ततो लिङ्गप्रभावेण कालं वञ्चितवान्मुनिः ॥
नान्ततो दृश्यते काल ईश्वरासक्तचेतसः ।
तत्र स्थित्वा तु सुमहत्कालं यः कालयेत्प्रजाः ॥
न तस्य क्रमितुं शक्तः कालो वै घोररूपिणः ।
ततः प्रभृति येऽन्येऽपि तस्मिन्नायतने स्थिताः ॥
तेषां नाऽऽक्रमते[4] कालः वर्षलक्षायुतैरपि ।
अन्यच्च ते प्रवक्ष्यामि रहस्यं वरवर्णिनि ॥
तस्य देवस्य चाऽग्रे तु कूपस्तिष्ठति वै श्रुतः[5] ।
तत्र कालोदकं नाम उदकं देवि तिष्ठति ॥
तस्यैव प्राशनाद्देवि पूतो भवति मानवः ।
यैस्तु तत्रोदकं पीतं नरैः स्त्रीभिश्च कर्मभिः ॥
स्वयं देवेन शर्वेण त्रिशूलाङ्केन चाऽङ्कितः ।
न तेषां परिवर्तो वै कल्पकोटिशतैरपि ॥
यत्पीत्वा भवबन्धोत्थभयं मुञ्चन्ति मानवाः ।
एतद्देवि रहस्यं तु कालोदकमुदाहृतम् ॥

1. P. पिङ्गाख्यो
2. P and B. पाशुपते
3. P and B. सम्प्रसादितः
4. P. न क्रमते
5. P. शुभः

दर्शनात्तस्य देवस्य महापातकिनोऽपि ये ।
तेऽपि भोगान् समश्नन्ति न तेषां क्रमते भवः ॥
तल्लिङ्गं सर्वलिङ्गानामुत्तमं परिकीर्तितम् ।
दर्शनात्तस्य लिङ्गस्य रुद्रत्वं याति मानवः ॥
तत्र वाऽपि हि यद्दत्तं दानं रुद्ररतात्मनाम्[1] ।
तद्वै महाफलं तेषां यच्छते भावितात्मनाम् ॥
खण्डस्फुटितसंस्कारं तत्र कुर्वन्ति ये नराः ।
रुद्रलोकं समासाद्य मोदन्ते सुखिनः[2] सदा ॥
सिद्धिलिङ्गाश्रमं[3] भग्नं दृष्ट्वा राज्ञे निवेदयेत् ।
स्वतो वा परतो वाऽपि ये कुर्वन्ति यथा तथा ॥
ते भोगानां नराः पात्रमन्ते मोक्षस्य भाजनाः ।
मोक्षप्रदायिनं[4] लिङ्गं यत्कार्यार्थस्य लिप्सया ॥
राजप्रतिग्रहासक्ताः कृतकान् पूजयन्ति ये ।
ते रुद्रशापनिर्दग्धाः पतन्ति नरके ध्रुवम् ॥
ये पुनः [5]सिद्धिलिङ्गानां प्रासादानां स्वशक्तितः ।
कुर्वन्ति पूजां सत्कारं[6] ते मुक्ता नाऽत्र संशयः ॥
कालेश्वरे तु यो देवि नरः कारयते पुरम् ।
एकविंशकुलोपेतो रुद्रलोके वसेच्चिरम् ॥
तत्र पूजा जपो होमः कालेशे क्रियते हि यत् ।
तत्र दीपप्रदानेन ज्ञानचक्षुर्भवेन्नरः ॥
प्राप्नोति[7] धूपदानेन तत्स्थानं रुद्रसेवितम् ।

1. P. रुद्रव्रतात्मनाम्
2. P. मोदते सुखितः
3. P. सिद्धलिङ्गाश्रयं
4. P. मोक्षप्रदायिने
5. P. सिद्धलिङ्गानां
6. P. पूजासत्कारं
7. P. प्राप्तोऽपि

जागरं ये प्रकुर्वन्ति कालेशस्यैव चाऽग्रतः ॥
ते मृता वृषभारूढाः शूलहस्तास्त्रिलोचनाः ।
भूत्वा रुद्रसमा भद्रे रुद्रलोकं तु ते गताः ॥
बहुनाऽत्र किमुक्तेन कालेशो देवि यत्कृतम् ।
तत्सर्वमक्षयं देवि[1] पुनर्जन्मनि जन्मनि ॥
एतत्ते सर्वमाख्यातं भूयो विस्तरतो[2] मया ।
न कस्यचिदिहाऽऽख्यातं गोपनीयं प्रयत्नतः ॥
कालेश्वरस्य देवस्य शिवस्याऽऽयतनं शुभम् ।
कालेश्वरसमीपे तु दक्षिणे वरवर्णिनि ॥
मृत्युना स्थापितं लिङ्गं सर्वरोगविनाशनम् ।
कूपस्य चोत्तरे भागे महालिङ्गानि सुव्रते ॥
एकं दक्षेश्वरं नाम द्वितीयं कश्यपेश्वरम् ।
पश्चान्मुखं तु यल्लिङ्गं तद्दक्षेश्वरसंज्ञकम् ॥
दक्षेश्वरस्य पूर्वेण महाकालस्तु तिष्ठति ।
कुण्डे स्नानं नरः कृत्वा महाकालं तु योऽर्चयेत् ॥
अर्चितं तेन सुश्रोणि जगदेतच्चराचरम् ।
दक्षिणस्यां दिशि तथा तस्य कुण्डस्य वै तटे ॥
स्थापितं देवलिङ्गं तु अन्तकेन महात्मना ।
महत्फलमवाप्नोति तस्य लिङ्गस्य दर्शनात् ॥
अन्तकेश्वरसामीप्ये लिङ्गं वै दक्षिणे स्थितम् ।
[3]शक्रेश्वरेति नामानं स्थापितं शक्रहस्तिना ॥

1. P. तेषां
2. P. विस्मरतो
3. P and B. सर्वेश्वरं तु

तस्यैव दक्षिणे भागे [1]मातलीश्वरमुत्तमम् ।
संस्थापितं मातलिना सर्वसौख्यप्रदायकम् ॥
देवस्य चाऽग्रतः कुण्डे तत्र तीर्थं वरानने ।
हस्तिपालेश्वरस्याऽग्रे कुण्डे तिष्ठति भामिनि ॥
तप्तं यत्र पुरा भद्रे अन्तकेनाऽन्तकारिणा ।
हस्तीश्वरस्य पूर्वेण लिङ्गं पूर्वामुखं स्थितम् ॥
विजयेश्वरनामानं सुरसिद्धैस्तु पूजितम् ।
महाकालस्य कुण्डं तु उत्तरे वरवर्णिनि ॥
वालिनाऽऽराधितश्चाऽहं तस्मिन् स्थाने तु पार्वति ।
बलिकुण्डं तु विख्यातं वाराणस्यां मम प्रियम् ॥
तस्य कुण्डस्य पूर्वेण लिङ्गं स्थापितवान् बलिः ।

॥ इति श्रीलिङ्गपुराणे गुह्यायतनवर्णनं नाम नवमोऽध्यायः ॥

तथा—

विद्याविघ्नेश्वरा रुद्राः शिवा ये च प्रकीर्तिताः ।
कृत्तिवासेश्वरो यत्र तत्र सर्वे व्यवस्थिताः ॥
तस्मिन् स्थाने महादैत्यो हस्ती भूत्वा ममाऽन्तिकम् ।
तस्य कृत्तिं विदार्याऽऽशु [2]करिणं स्वंजनप्रभम् ॥
वासं तु कृतवान् पूर्वं कृत्तिवासस्ततो ह्यहम् ।
अविमुक्ते स्थितश्चाऽहं तस्मिन् स्थाने महामुने ॥

1. P and B. मातलेश्वरम्
2. B. करिणी त्वञ्जनप्रभम्

लिङ्गं दारुवने गुह्यमृषिसङ्घैस्तु पूजितम् ।
पश्चिमाभिमुखश्चाऽहं तस्मिन्नायतने स्थितः ॥
अन्तकेश्वरलिङ्गं तु मम चाऽग्रे स्थितं शुभम् ।
उत्तरे मम लिङ्गं तु स्थापितं शक्रहस्तिना ॥
मातलीश्वरलिङ्गं तु दक्षिणेन स्थितं मम ।
मम पूर्वेण कूपस्तु नानासिद्धिसमन्वितः ॥
अणिमाद्यास्तथाऽष्टौ च सिद्धयस्तत्र संस्थिताः ।

तथा—

ये ते पाशुपतास्तत्र मध्यमेश्वरसंस्थिताः ।
तेषामनुग्रहार्थं च कृत्तिवासाः स्थितः पुरा ॥
रुद्राणां तु शरीरन्तु मध्यमेश्वरमीश्वरम् ।
कृत्तिवासाः शिवः प्राहुरेतद्गुह्यतरं मम ॥
अन्ये च बहवः सिद्धा ऋषयस्तत्र संस्थिताः ।
उपासन्ति च मां नित्यं मद्भावगतमानसाः[1] ॥
वाराणस्यां प्रमुच्यन्ते ये जनास्तत्र संस्थिताः ।
कृमिकीटाः प्रमुच्यन्ते महापातकिनश्च ये ॥
स्मरणाद्विप्र लिङ्गस्य पापं वै भस्मसाद्भवेत् ।

तथा—

कृत्तिवासेश्वरं लिङ्गं ये यजन्ति शुभान्विताः[2] ।
ते रुद्रस्य शरीरे तु प्रविष्टा अपुनर्भवाः[3] ॥

1. B. गतचेतसः
2. P and B. शुभार्थिनः
3. P and B. प्रविष्टाश्च पुनर्भवाः

अनेनैव शरीरेण प्राप्ता निर्वाणमुत्तमम् ।
बहूनि तत्र तीर्थानि संख्या कर्तुं न शक्यते ॥
दशकोटिसहस्राणि तीर्थान्यत्रैव वै मुने ।
कृत्तिवासेश्वरो यत्र तत्र सर्वे व्यवस्थिताः[1] ॥
तस्मिँल्लिङ्गे तु सान्निध्यं त्रिकालं नाऽत्र संशयः ।
ब्रह्मविष्णुसुरेन्द्राणामप्रकाश्यं कृतं मया ॥
यत्र तीर्थान्यनेकानि कृतानि बहुभिर्द्विजैः ।
पुलस्त्याद्यैर्महाभागैर्लोमशाद्यैर्महात्मभिः ॥
कृत्तिवासेश्वरं लिङ्गं[2] न जानन्ति सुरासुराः ।

भृगुरुवाच—

कृते त्रेताद्वापरे च कलौ च परमेश्वरम् ।
महागुह्यातिगुह्यं च संसारार्णवतारकम् ॥
केन कार्येण देवेश त्वयेदं न प्रकाशितम् ।
कृत्तिवासेश्वरं लिङ्गमविमुक्ते तु संस्थितम् ॥

ईश्वर उवाच—

दशकोटिसहस्राणि आगच्छन्ति दिने दिने ।
धर्मक्रियाविनिर्मुक्ताः सत्यशौचविवर्जिताः ॥
[3]देवद्विजगुरून्नित्यं निन्दन्तो भक्तिवर्जिताः ।
मायामोहसमायुक्ता दम्भमोहसमन्विताः ॥

1. B. व्यपाश्रिताः
2. B. देवं
3. This line is missing in the Udaipur Ms. and is supplied by the Punjab and Bhonsle Mss.

शूद्रान्ननिरता विप्रा विह्वला रतिलालसाः ।
कृत्तिवासेश्वरं प्राप्य ते सर्वे विगतज्वराः ॥
संसारभयनिर्मुक्ताः सर्वपापविवर्जिताः ।
सुखेन मोक्षमायान्ति यथा सुकृतिनस्तथा ॥
दिव्यैर्विमानैरारूढाः किङ्किणीरवकान्वितैः ।
देवानां भुवनं लभ्यं ते यान्ति परमं पदम् ॥
जन्मान्तरसहस्रेण मोक्षो लभ्येत वा न वा ।
एकेन जन्मना तत्र कृत्तिवासे तु लभ्यते ॥
पूर्वजन्मकृतं पापं तस्य लिङ्गस्य दर्शनात्[1] ।
[2]तत्र सिद्धेश्वरं नाम मुख्यलिङ्गं तु संस्थितम् ॥
अन्तकेश्वरदेवस्य स्थितं चैवोत्तरेण तु ।
आलयं सर्वसिद्धानां[3] तत्स्थानं परमं महत् ॥
अव्ययं शाश्वतं दिव्यं विरजं ब्रह्मणालयम् ।
शक्तिमूर्तिस्थितं शान्तं शिवं परमकारणम् ॥
अव्यक्तं शाश्वतं सूक्ष्मं सूक्ष्मात् सूक्ष्मतरं महत् ।

तथा—

ईश्वर उवाच—

एतद्दारुवनस्थानं[4] कलौ देवस्य गीयते ।
परस्परं तु यज्ज्ञानं मोक्षमार्गप्रदायकम् ॥
प्राप्यते द्विजशार्दूल कृत्तिवासे न संशयः ।
कृते तु त्र्यम्बकं प्रोक्तं त्रेतायां कृत्तिवाससम् ॥

1. P and B. तपसा च विमुच्यति ।
तत्क्षणात् तस्य ते पापं तस्य लिङ्गस्य दर्शनात् ।

2. Six lines from दर्शनात् are omitted by B.

3. P. सिद्धीनां

4. P and B. वनं स्थानं

माहेश्वरं तु देवस्य द्वापरे नाम गीयते ।
हस्तिपालेश्वरं नाम कलौ सिद्धैस्तु गीयते ॥
दण्डिरूपधरेणैव देवदेवेन शम्भुना ।
द्विजेष्वनुग्रहश्चाऽत्र तत्र स्थाने कृतः पुरा ॥
युगे युगे तु तत्त्वज्ञा ब्राह्मणाः शान्तचेतसः ।
उपासते च मां नित्यं जपन्ति शतरुद्रियम् ॥
आदेहपतनाद्विप्रास्तस्मिन् क्षेत्र उपासकाः ।
जपन्ति रुद्राध्यायं ते स शिवः कृत्तिवाससम् ॥
तेषां देवः सदा तुष्टो दिव्यान् लोकान्[1] प्रयच्छति ।
ये ते जप्ता[2] मया रुद्राः शङ्कुकर्णालये पुरा ॥
तेऽविमुक्ते तु तिष्ठन्ति कृत्तिवासे न संशयः ।
द्वारं यत् सांख्ययोगानां सा[3] तेषां वसतिः स्मृता ॥

तथा—

श्यामास्तु पुरुषा रौद्रा वैद्युता हरिपिङ्गलाः ।
अशरीराः शरीरा ये ते च सृष्टा मया पुरा ॥
नीलकण्ठाः श्वेतमुखा बिम्बोष्ठाश्च कपर्दिनः ।
हरित्केशाः शृङ्गिणश्च लम्बोष्ठास्तिग्महेतयः ॥
[4]असंख्याः परिसंख्यातास्तथाऽन्ये च सहस्रशः ।
तेऽविमुक्ते तु तिष्ठन्ति कृत्तिवाससमीपतः ॥
रुद्राणां तु शिवो[5] ज्ञेयं कृत्तिवासेश्वरं परम् ।
तेन तैः प्रेरिता यान्ति दुष्प्रापमकृतात्मभिः ॥

1. P. कामान् for लोकान् B. सर्वान् कामान्
2. B. यष्टा
3. B and P. स स्मृतः for सा स्मृता
4. P. B. संख्याताः
5. P. B. शिरो

अशाश्वतमिदं ज्ञात्वा मानुष्यं बहुकिल्बिषम् ।
अविमुक्ते तु वस्तव्यं जप्तव्यं शतरुद्रियम् ॥
कृत्तिवासेश्वरो देवो द्रष्टव्यश्च पुनः पुनः ।
यदीच्छेत्तारकं ज्ञानं शाश्वतं चाऽमृतप्रदम् ॥
[1]एतत्सर्वं प्रकर्तव्यं यदीच्छेन्मामकं पदम् ।

तथा—

गजवक्त्रः स्वयंभूतस्तिष्ठत्यत्र विनायकः[2] ।
कूष्माण्डराजशम्भुश्च जयन्तश्च मदोत्कटः[3] ॥
सिंहव्याघ्रमुखाः केचिद्विकटाः कुब्जवामनाः ।
यत्र नन्दी महाकालः चित्रघण्टो महेश्वरः ॥
दमिचण्डेश्वरश्चैव घण्टाकर्णो महाबलः[4] ।
एते चाऽन्ये च बहवो गणा [5]रुद्रेश्वराय वै ॥
रक्षन्ति सततं सर्वे अविमुक्तं हि मे गृहम् ।
अयनं तूत्तरं ज्ञेयं दमिचण्डेश्वरं मम ॥
दक्षिणं शङ्कुकर्णं तु ओङ्कारं विषुवं मम ।
दशकोट्यस्तु तीर्थानां संविशन्त्यथ पर्वणि ।
रहस्यं विप्रमन्त्राणां गोपनीयं प्रयत्नतः ॥
यच्च पाशुपतं प्रोक्तं पदं सम्यङ्निषेवितम् ।
पूजनात्तदवाप्नोति षण्मासाभ्यन्तरेण तु ॥

1. P and B. एतत्सदैव कर्तव्यं
2. B. तिष्ठत्यग्रविनायकः
3. B. कटोत्कटः
4. B. महेश्वरः
5. B. रुद्रस्य ये स्मृताः

ममैव प्रीतिरतुला तस्मिन्नायतने सदा।
अन्ये च बहवस्तत्र सिद्धलिङ्गाश्च सुव्रते॥
सर्वेषामेव स्थानानां तत्स्थानं [1]तु ममाऽधिकम्।
ज्ञात्वा कलियुगं घोरमप्रकाश्यं कृतं मया॥

न सा गतिः प्राप्यते यज्ञदानै-
स्तीर्थाभिषेकैर्न तपोभिरुग्रैः।
अन्यैश्च धर्मैर्विविधैः शुभैर्वा
या कृत्तिवासे तु जितेन्द्रियैश्च॥

तथा—

दर्शनाद्देवदेवस्य ब्रह्महाऽपि प्रमुच्यते।
स्पर्शने पूजने चैव सर्वयज्ञफलं लभेत्॥
श्रद्धया परया देवं येऽर्चयन्ति सनातनम्।
फाल्गुनस्य चतुर्दश्यां कृष्णपक्षे समाहिताः॥
पुष्पैः फलैस्तथाऽन्यैश्च भक्ष्यैरुच्चावचैस्तथा।
क्षीरेण मधुना चैव तोयेन सह सर्पिषा॥
तर्पयन्ति परं लिङ्गमर्चयन्ति देवं[2] शुभम्।
हुडुङ्कारनमस्कारैः नृत्यगीतैस्तथैव च॥
मुखवाद्यैरनेकैश्च स्तोत्रमन्त्रैस्तथैव च।
उपोष्य रजनीमेकां भक्त्या परमया हरम्॥
ते यान्ति परमं स्थानं सदाशिवमनामयम्।
भूता हि चैत्रमासस्य अर्चयेत्परमेश्वरम्॥

1. B. मम चाधिकम्
2. B. परं

स वित्तेशपुरं प्राप्य क्रीडयेत् यक्षराडिव ।
वैशाखस्य चतुर्दश्यां योऽर्चयेत्प्रयतः शिवम् ॥
वैशाखं लोकमासाद्य तस्यैवाऽनुचरो भवेत् ।
ज्येष्ठे मासि चतुर्दश्यां योऽर्चयेच्छ्रद्धया हरम् ॥
सोऽग्निलोकमवाप्नोति यावदाचन्द्रतारकम् ।
चतुर्दश्यां शुचौ मासि योऽर्चयेत्तु सुरेश्वरम् ॥
सूर्यस्य लोके सुसुखी क्रीडते यावदीप्सितम् ।
श्रावणस्य चतुर्दश्यां कामलिङ्गं समर्चितम् ॥
स याति वारुणं लोकं क्रीडते चाऽप्सरैः सह ।
मासि भाद्रपदे शुक्लमर्चयित्वा तु शङ्करम् ॥
पुष्पैः फलैश्च विविधै रुद्रस्यैति सलोकताम् ।
पितृपक्षे चतुर्दश्यां पूजयित्वा महेश्वरम् ॥
प्राप्यते पितृलोकं तु क्रीडते पूजितस्तु तैः ।
प्रबोधमासे[1] देवेशमर्चयित्वा महेश्वरम् ॥
स चन्द्रलोकमाप्नोति क्रीडते यावदीप्सितम्[2] ।
बहुले मार्गशीर्षस्य अर्चयित्वा पिनाकिनम्[3] ॥
विष्णुलोकमवाप्नोति [क्रीडते][4]कालमक्षयम् ।
अर्चयित्वा तथा पुष्ये स्थाणुं तुष्टेन चेतसा ॥
प्राप्नोति नैर्ऋतं स्थानं तेन वै[5] सह मोदते ।
माघे समर्चयित्वा वै पुष्पमूलफलैः शुभैः ॥

1. B. प्रबोधमाने
2. B. कालमक्षयम्
3. Two lines omitted by B.
4. [ ] supplied by P.
5. B and P तेनैव

प्राप्नोति शिवलोकं तु त्यक्त्वा संसारसागरम्।
कृत्तिवासेश्वरं देवमर्चयेत्तु प्रयत्नतः ॥
अविमुक्ते च वस्तव्यं यदीच्छेन्मामकं पदम् ।
गायन्ति सिद्धाः किल गीतकानि
धन्याऽविमुक्ते तु नरा वसन्ति ।
स्वर्गापवर्गस्य पदस्य लिङ्गं
ये कृत्तिवासं शरणं प्रपन्नाः ॥

तथा—

ईश्वर उवाच—

अन्यदायतनं पुण्यं काशिपुर्यां वरानने ।
धन्वन्तरिः पुरा जातः काशिराजगृहे शुभे ॥
तेन भद्रे तथा काले अहमाराधितः शुभे ।
भृङ्गीशेश्वरनामानं[1] लिङ्गं तत्र स्थितं मम ॥
पश्चान्मुखः स्थितश्चाऽहं कूपस्तु मम चाऽग्रतः ।
तिष्ठन्त्योषधयस्तत्र सर्वा ह्यमृतसंभवाः ॥
क्षिप्तास्तस्मिन् पुरा काले वैद्यराजेन सुन्दरि ।
तेन तत्प्रोच्यते स्थानं वैद्यनाथं महेश्वरि ॥
तस्मिन् कूपे तु ये देवि पानीयं पिबते नरः ।
व्याधिभिः संप्रमुच्यन्ते[2] वैद्यनाथ[3]प्रभावतः ॥
कूपस्य चोत्तरे भागे हरिकेश्वरसंज्ञकम्[4] ।
रोगैश्चाऽपि प्रमुच्यन्ते हरिकेश्वरदर्शनात् ॥

1. B and P. तुङ्गाशेश्वरनामानं
2. B and P. प्रमुच्यते
3. B and P. तुङ्गनायक
4. B and P. हरीशेश्वरसंज्ञितम्

तुङ्गेशस्य समीपे तु दक्षिणे वरवर्णिनि ।
शैवं तडागमाख्यातं[1] शिवेनाऽधिष्ठितं शुभम् ॥
पश्चिमे तु तटे रम्ये स्थितोऽहं तत्र सुव्रते[2] ।
पश्चिमाभिमुखो भद्रे तस्मिन् स्थाने व्यवस्थितः ॥
शिवेश्वर[3] इति ख्यातो भक्तानां वरदायकः ।
शिवेश्वराद्दक्षिणतो नाऽतिदूरे व्यवस्थितम् ॥
पश्चिमाभिमुखं लिङ्गं स्थापितं जमदग्निना ।
जमदग्निलिङ्गात्पश्चिमतो नाऽतिदूरे व्यवस्थितम् ॥
भैरवेश्वरविख्यातं सुरासुरनमस्कृतम् ।
तत्र दुर्गा स्थिता भद्रे ममाऽपि हि भयंकरा ॥
नृत्यमाना तु सा देवी लिङ्गस्यैव समीपतः ।
भैरवेशं तु तं दृष्ट्वा संसारे न पतेत्पुनः ॥
तस्यैव भैरवेशस्य कूपस्तिष्ठति चोत्तरे ।
तस्योपस्पर्शनं कृत्वा सर्वयज्ञफलं लभेत् ॥
कूपस्य पश्चिमे भागे लिङ्गं तिष्ठति भामिनि ।
शुकेश्वरमिति ख्यातं स्थापितं व्याससूनुना ॥
तं दृष्ट्वा मानवो देवि वैराग्यमपि विन्दति ।
तस्यैव चोत्तरे पार्श्वे तडागं यत्र तिष्ठति ॥
तत्र स्नात्वा वरारोहे कृतकृत्यो भवेन्नरः ।
नैर्ऋते तु दिशाभागे शुकेशस्य तु सुन्दरि ॥
स्थापितं मुखलिङ्गं तु व्यासेनाऽपि महर्षिणा ।
व्यासेश्वरं तु विख्यातमृषिसङ्घैस्तु वन्दितम् ॥

1. P. तदागमाख्यातं
2. B. सुन्दरि
3. P. शिवेश्वरेति विख्यातो

व्यासकुण्डे नरः स्नात्वा अर्चयित्वा सुरान् पितॄन् ।
अक्षयाँल्लभते लोकान् यत्र तत्राऽभिकाङ्क्षितान् ॥
व्यासतीर्थसमीपे तु पश्चिमेन यशस्विनि ।
घण्टाकर्णह्रदं नाम सर्वसौख्यप्रदायकम् ॥
स्नानं कृत्वा ह्रदे तस्मिन् व्यासस्यैव तु दर्शनात् ।
यत्र तत्र मृतो वाऽपि वाराणस्यां मृतो भवेत् ॥
तत्र देवि तनुं त्यक्त्वा लभेद्गाणेश्वरीं गतिम् ।
घण्टाकर्णसमीपे तु उत्तरेण यशस्विनि ॥
पुण्यमप्सरसां ख्यातं पञ्चचूडाविनिर्मितम् ।
पञ्चचूडाह्रदे स्नात्वा दृष्ट्वा चैव तमीश्वरम् ॥
स्वर्गलोकं नरो याति पञ्चचूडाप्रियः सदा ।
तस्य चोत्तरदेशे तु अशोकवनसंस्थितम् ॥
अशोकवनमध्यस्थं तत्र कुण्डं शुभोदकम् ।
तस्मिन् कुण्डे नरः स्नात्वा विलोकश्चैव जायते ॥
विलोकाच्चोत्तरे भागे नाम्ना मन्दाकिनी शुभा ।
स्वर्गलोके तु सा पुण्या किं पुनर्मानुषे शुभे ॥
यत्र वै देवदेवस्य सान्निध्यं देवि सर्वदा ।
लिङ्गं तत्र स्वयं भूतं क्षेत्रमध्ये तु सुन्दरि ॥

तथा—

ईश्वर उवाच—

मन्दाकिनीजले स्नात्वा दृष्ट्वा वै मध्यमेश्वरम् ।
एकविंशकुलोपेतो रुद्रलोके वसेच्चिरम् ॥

एतत्किल सदा प्राहुः पितरः सपितामहाः ।
योऽपि चाऽस्मत्कुले जातो मन्दाकिन्या जलोद्गतः[1] ॥
भोजयेच्च यतो विप्रान् यतीन् पाशुपतान् बुधः ।
स्नानं दानं तपो[2] होमः स्वाध्यायं पितृतर्पणम् ॥
पिण्डनिर्वापणं चैव सर्वं भवति चाऽक्षयम् ।
क्षेत्रस्य चाऽस्य संक्षेपान्मया ते कथितं स्फुटम्[3] ॥
दक्षिणं भूमिभागं तु मध्यमेशस्य यद्भवेत् ।
तत्र पूर्वामुखं लिङ्गं विश्वेदेवैः प्रतिष्ठितम् ॥
पश्चान्मुखं तु देवेशं[4] वीरभद्रप्रतिष्ठितम् ।
[5]पश्चान्मुखेन दृष्टेन वीरभद्रसलोकताम् ॥
तयोस्तु दक्षिणे देवि भद्रकालीह्रदं स्मृतम् ।
कुण्डस्य पश्चिमे तीरे शौनकेन प्रतिष्ठितम् ॥
मतङ्गेश्वरनामानं लिङ्गं तत्रैव तिष्ठति ।
पूर्वामुखं तु तल्लिङ्गं सर्वसिद्धिप्रदायकम् ।
मतङ्गेश्वरकोणे तु वायव्ये तु यशस्विनि ।
प्रतिष्ठितानि लिङ्गानि नरैस्तत्र महात्मभिः ॥
तस्यैव दक्षिणे भागे जयन्तेन प्रतिष्ठितम् ।
[6][देवराजस्य पुत्रेण आत्मनो जयमिच्छता ॥

1. P. जले प्लुतः
2. P. जपो
3. B. शुभम्
4. B. देवेशि
5. B. पूर्वामुखेन
6. P and B add [ ]

ब्रह्मतारेश्वरं चैवं तस्मिन् स्थाने सुरेश्वरि ।
पितृभिः याज्ञवल्क्येन तत्र लिङ्गं प्रतिष्ठितम् ॥]
तस्य दक्षिणदिग्भागे सिद्धिकूटः प्रकीर्तितः[1] ।
सिद्धाः पाशुपतास्तत्र मम लिङ्गार्चने रताः ॥
तेषां वै तत्र कूटोऽयं सिद्धकूटः स सिध्यते ।
तत्र ध्यानरताः केचिज्जपं कुर्वन्ति चाऽपरे ॥
स्वाध्यायमन्ये कुर्वन्ति तपः कुर्वन्ति चाऽपरे ।
[2]आकाशशयनं केचित्केचिद्भावं समाश्रिताः ॥
अधोमुखास्तथैवाऽन्ये धूमपेयास्तथाऽपरे ।
प्रदक्षिणान्ये कुर्वन्ति काष्ठमौनं तथाऽपरे ॥
कुर्वन्ति पुष्पाहरणं गडूकानां तथा परे ।
तैः सर्वैः स्थापितं लिङ्गमर्चापूजनतत्परैः[3] ॥
तेषां तत्र तदा भक्तिं ज्ञात्वा देवे हि सुव्रते ।
सान्निध्यं कृतवानस्मिंस्तदनुग्रहकाम्यया ॥
सिद्धेश्वरं तु विख्यातं सर्वपापहरं शुभम् ।
पूर्वामुखं तु तल्लिङ्गं सिद्धकूटे व्यवस्थितम् ॥
मानवानां हितार्थाय तत्र स्थाने स्थितो ह्यहम् ।
देवस्य पश्चिमे भागे वापी तिष्ठति सुन्दरि ॥
तत्र वापीजले स्नात्वा दृष्ट्वा सिद्धेश्वरं नरः ।
अस्मिन् क्षेत्रे तु निर्माल्यं पापं संक्रमते तु यत् ॥

1. B. प्रतिष्ठितः
2. P omits these two lines
3. P and B. तर्पणैः

तत् सर्वं विलयं याति सिद्धेश्वरस्य दर्शनात् ।

॥ इति श्रीलिङ्गपुराणे[1] वाराणसीमाहात्म्ये गुह्यायतन-
वर्णनं नाम दशमोऽध्यायः ॥

ईश्वर उवाच—

सिद्धकूटस्य पूर्वेण देवं पश्चान्मुखं स्थितम् ।
व्याघ्रेश्वरेति विख्यातं सर्वदेवैस्स्तुतं शुभे ॥
तेन दृष्टेन लभते उत्तमं पदमव्ययम् ।
व्याघ्रेश्वराद्दक्षिणे च स्वयंभूस्तत्र तिष्ठति ॥
दिव्यं लिङ्गं तु तत्रस्थं देवानामपि दुर्लभम् ।
रहस्यं सर्वदेवानां भूमिं भित्त्वा तु चोत्थितम् ॥
तेन लिङ्गेन दृष्टेन पूजितेन स्तुतेन च ।
कृतकृत्यो भवेद्देवि संसारे न पुनर्विशेत् ॥
पूर्वामुखं तु तल्लिङ्गं ज्येष्ठस्थानमिदं शुभम् ।
मानवानां हितार्थाय तत्र स्थाने स्थितो ह्यहम् ॥
अस्याऽग्रे देवदेवेशि मुखलिङ्गं च तिष्ठति ।
पश्चान्मुखं तु तं देवि पञ्चचूडा शुभेक्षणा ॥
तस्य दक्षिणपार्श्वे तु नाम्ना प्रहसितेश्वरम् ।
तं दृष्ट्वा लभते देवि आनन्दं ब्रह्मणः पदम् ॥
तस्योत्तरे तु देवेशि पुण्यं लिङ्गं त्वया कृतम् ।
निवासेति च विख्यातं सर्वेषामेव योगिनाम् ॥
तेन दृष्टेन देवेशि योगं विन्दति शाङ्करम् ।
चतुःसमुद्रविख्यातः कूपस्तिष्ठति सुन्दरि ॥

1. P omits लिङ्गपुराणे

चतुःसमुद्रस्नानेन यत्फलं लभते नरः ।
तत्फलं सकलं तस्य उदकस्पर्शनाच्छुभे ॥
तत्रैव त्वं महादेवि रममाणा मया सह ।
ये च त्वां पूजयिष्यन्ति भक्तियुक्ताश्च मानवाः ॥
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ।

ईश्वर उवाच—

कूपस्य उत्तरे देवि व्याघ्रेशस्य तु दक्षिणे ।
तिष्ठते तत्र वै लिङ्गं पूर्वामुखं च सुन्दरि ॥
दण्डीश्वरमिति ख्यातं वरदं सर्वदेहिनाम् ।
तेन दृष्टेन लभ्येत ऐश्वरं पदमव्ययम् ॥
तस्योत्तरे तडागं च देवि सर्वत्र विश्रुतम् ।
सन्ध्याप्रणामकुपिता[1] यदा तस्मिन् सुरेश्वरि ॥
बहुरूपं समास्थाय देवदेवः स्वयं हरः ।
दण्डकश्च तदा क्षिप्तो देवाग्रे स प्रभाकरः ॥
तेन तत्र कृतं दिव्यं तडागं लोकविश्रुतम् ।
क्रोधेन प्रस्थिता देवि तुहिनाचलसंमुखम् ॥
तावदस्य तदग्रे वै तडागं महदद्भुतम् ।
तं दृष्ट्वा तु तदा देवि निवृत्ता पुनरेव वा[2] ॥
वेश्म प्रविश्य देवेशि स्थिता तत्रैव भामिनि ।
दण्डेन देवदेवस्य स्थितेन सुमहत्सरः ॥
दण्डखातमिति प्राहुर्ये पुराणविदो जनाः ।

1. P. B. मध्याप्रणामकुपिता (?)
2. P. B. सा for वा

तस्मात्स्नानं तु कर्तव्यं तत्रैव श्रेय इच्छया ॥
तत्र स्नाने कृते देवि कृतकृत्यो भवेन्नरः ।
दण्डखाते नरः स्नात्वा तर्पयित्वा स्वकान् पितॄन् ॥
नरकस्थास्तु ये देवि पितृलोके वसन्ति ते ।
पिशाचत्वं गता ये च नराः पापेन कर्मणा ॥
तेषां पिण्डप्रदानेन देहस्योद्धरणं स्मृतम् ।
दण्डखाते नरः स्नात्वा किं भूयः परिशोचति ॥
यस्य स्मरणमात्रेण पापसङ्घातपञ्जरम् ।
नश्यते शतधा देवि दण्डखातस्य दर्शनात् ॥
तस्य दण्डस्य माहात्म्यं पुण्यं शृणु महायशः ।
सूर्योपरागे देवेशि नरा आयान्ति सुव्रते ॥
कुरुक्षेत्रं महत्पुण्यं[1] सर्वदेवनमस्कृतम् ।
निवृत्ते ग्रहणे[2] देवि कुरुक्षेत्रात्परं पदम् ॥
दण्डखातं समायान्ति आत्मशुद्ध्यर्थकारणम् ।
दर्शनात्तस्य खातस्य कृतकृत्योऽभिजायते ॥
अन्यदायतनं तत्र मम देवि महेश्वरि ।
जैगीषव्येश्वरं नाम स्थापितं सुमहात्मना ॥
जैगीषव्यगुहा तस्मिन् देवदेवस्य सन्निधौ ।
त्रिकालमर्चयँल्लिङ्गं भक्त्या तद्भावितात्मना[3] ॥
एवमाराधितो देवि जैगीषव्येण धीमता ।
तस्य पृष्टश्चाऽहं देवि सर्वान् कामान् प्रदत्तवान् ।

1. P. B. कुरुक्षेत्रस्य माहात्म्यं
2. P. B. निवृत्तिग्रहणे
3. B omits this line

तस्माच्च सुकृतं लिङ्गं पूजयिष्यन्ति ये नराः ॥
ज्ञानं तेषां ध्रुवं देवि अचिराज्जायते भुवि ।
त्रिरात्रं तत्र कृत्वा वै यो नरः पूजयिष्यति ॥
गुह्यं प्रविश्यते चैव ज्ञानयुक्तो भवेन्नरः ।
तस्य वै पश्चिमे भागे सिद्धकूपस्तु[1] दक्षिणे ॥
पूर्वामुखं तु तल्लिङ्गं देवलेन प्रतिष्ठितम् ।
तेन दृष्टेन देवेशि ज्ञानवान् जायते नरः ॥
तस्यैव च समीपस्थं शतकालप्रतिष्ठितम् ।
तस्य दक्षिणदिग्भागे नाऽतिदूरे तपस्विनि[2] ॥
मुखलिङ्गं [3]तु तद्भद्रे पश्चिमाभिमुखं शुभे ।
शातातपेश्वरं नाम स्थापितं च महर्षिणा ॥
तेन दृष्टेन लभते गतिमिष्टाञ्च शाश्वतीम् ।
तस्य पश्चिमदिग्भागे महालिङ्गं[4] च तिष्ठति ॥
हेतुकेश्वरनामानं सर्वसिद्धिफलप्रदम् ।
तस्यैव दक्षिणे भागे मुखलिङ्गं च तिष्ठति ॥
कणादेश्वरनामानं पश्चिमाभिमुखं स्थितम् ।
सिद्धस्तत्र महाभागे कणादस्तु ऋषिः पुरा ॥
कूपस्तत्र समीपस्थः पुण्यदः सर्वदेहिनाम् ।
कणादेशाद्दक्षिणेन अन्यदायतनं शुभम् ॥
पश्चान्मुखन्तु भूतीशं सर्वपापप्रणाशनम् ।
तस्यैव पश्चिमे भागे लिङ्गं पश्चान्मुखं स्थितम् ॥

1. P. B. कूपतु
2. P. B. यशस्विनि B. व्यवस्थितः
3. P. B. स्थितं भद्रे
4. P. महल्लिङ्गं

चतुर्मुखं तु तल्लिङ्गमाषाढं नाम विश्रुतम् ।
अन्यानि तत्र लिङ्गानि स्थापितानि महान्ति च ॥
तेषां पूर्वेण लिङ्गं तु दैत्येन स्थापितं पुरा ।
तेन दृष्टेन देवेशि पुत्रवान् जायते नरः ॥
भारभूतेश्वरं देवं तत्र[1] दक्षिणतः स्थितम् ।
पश्चान्मुखं तु तल्लिङ्गं भारभूतेश्वरं प्रिये ॥
व्यासेश्वरस्य पूर्वेण लिङ्गं पश्चान्मुखं स्थितम् ।
पराशरेण मुनिना स्थापितं मम भक्तितः[2] ॥
पश्चान्मुखं तु तद्देवि मुखलिङ्गं च तिष्ठति ।
अत्रिणा स्थापितं भद्रे मम भक्तिपरेण च ॥
पश्चान्मुखं तु तल्लिङ्गं सर्वशास्त्रप्रदायकम् ।
व्यासेश्वरस्य पूर्वेण द्वौ लिङ्गौ तत्र सुव्रते ॥
स्थापितौ देवदेवेशि शङ्खेन लिखितेन च ।
तौ दृष्ट्वा मानवो भद्रे ऋषिलोकमवाप्नुयात् ॥
अन्यच्च देवदेवस्य स्थानं गुह्यं यशस्विनि ।
लिङ्गं विश्वेश्वरं नाम सर्वदेवैस्तु वन्दितम् ॥
तेन दृष्टेन लभ्येत व्रतात्पाशुपतात्फलम् ।
पूर्वोत्तरदिशाभागे तस्य देवस्य सुन्दरि ॥
अवधूतं महत्तीर्थं सर्वपापपनुत्तमम् ।
तस्य पूर्वेण सँल्लग्नं नाम्ना पशुपतीश्वरम्[3] ॥

1. P. दैवं तस्य
2. P. B. मुनिसत्तम (?)
3. P. B. पाशुपतीश्वरं

तस्य दर्शनमात्रेण पशुयोनिं न गच्छति ।
चतुर्मुखं तु तल्लिङ्गं पश्चिमाभिमुखं स्थितम् ॥
तस्य दक्षिणदिग्भागे लिङ्गं पश्चमुखं स्थितम् ।
ऋषिणा स्थापितं भद्रे गोभिलेन महात्मना ॥
तं दृष्ट्वा मानवो देवि ऋषिलोकं स गच्छति ।
तस्यैव पश्चिमे देवि लिङ्गं पश्चान्मुखं स्थितम् ॥
विद्याधराधिपतिना कृतं जीमूतवाहिना ।

॥ इति श्रीलिङ्गपुराणे गुह्यायतनवर्णनं नामैकादशोऽध्यायः ॥

ईश्वर उवाच—

अन्यदायतनं देवि वाराणस्यां मम प्रिये ।
गभस्तीश्वरनामानं लिङ्गं पश्चान्मुखं स्थितम् ॥
सूर्येण स्थापितं भद्रे मम भक्तिपरेण वै ।
तस्मिन्ममापि सान्निध्यं नित्यमेव यशस्विनि ॥
ऐशानीं मूर्तिमास्थाय तत्र स्थाने स्थितो ह्यहम् ।
तं दृष्ट्वा मानवो देवि ऐशानं लोकमाप्नुयात् ॥
तस्य दक्षिणपार्श्वे तु दधिकर्णह्रदं स्थितम् ।
उत्तरे कूपमेवं तु तस्य नामस्य सुन्दरि ॥
दधिकर्णेश्वरं देवं मुखलिङ्गं च तिष्ठति ।
पूर्वामुखं तु देवेशि गभस्तीशस्य चोत्तरे ॥
दक्षिणेन गभस्तीशाद्वारुणस्यां तु सुव्रते ।
मानवानां[1] हितार्थाय त्वं च तत्र व्यवस्थिता ॥

1. P. B. मनुष्याणां

आराधयन्ति देवि त्वामुत्तराभिमुखीं स्थिताम्।
ये च त्वा पूजयिष्यन्ति तस्मिन् स्थाने स्थितो ह्यहम्॥
तेषां त्वं विविधाँल्लोकान् संप्रदास्यसि मोदते।
जागरं ये प्रकुर्वन्ति तवाऽग्रे दीपधारिणः॥
तेषां त्वमक्षयाँल्लोकान् वितरिष्यसि भामिनि[1]।
आलयं ये प्रकुर्वन्ति तवाऽर्थे वरवर्णिनि[2]॥
तेषां त्वमक्षयाँल्लोकान् प्रयच्छसि न संशयम्।
आलयं ये प्रकुर्वन्ति भूमिं सम्मार्जयन्ति च॥
तेषामष्टसहस्रस्य सुवर्णस्य फलं लभेत्।
त्वामुद्दिश्य तु यो देवि ब्राह्मणान् ब्राह्मणीश्च ह॥
भोजयिष्यति यो देवि तस्य पुण्यफलं श‍ृणु।
तव लोके वसेत्कल्पमिहैवाऽऽगच्छते पुनः॥
नरो वा यदि वा नारी सर्वभोगसमन्वितौ।
धनधान्यसमायुक्तौ जायेते च महाकुले॥
सुभगौ दर्शनीयौ च रूपयौवनदर्पितौ।
भवेतामीदृशौ देवि सर्वसौख्यस्य भाजने॥
मानुषं दुर्लभं प्राप्य विद्युत्संपातचञ्चलम्।
येन दृष्टाऽसि सुश्रोणि तस्य जन्मभयं कुतः॥
मायापुर्यां तु ललितां दृष्ट्वा यल्लभते फलम्।
तत्फलं तस्य देवेशि यस्त्वां तत्र निरीक्षयेत्॥
पृथ्वीं प्रदक्षिणं कृत्वा यत्फलं लभते नरः।
तत्फलं ललितायां च वाराणस्यां न संशयः॥

1. B omits this line
2. P omits this line and the next

तेन ते नाम विख्यातं तथा मुखनिरीक्षिणी[1] ।
मुखप्रेक्षणिकां दृष्ट्वा सौभाग्यं चोत्तमं लभेत् ॥
माघे मासि चतुर्थ्यां तु तस्मिन्काल उपोषितः ।
अर्चयित्वा तु यो देवि जागरं तत्र कारयेत् ॥
तस्यर्द्धिमत् कुलं देवि त्रैलोक्ये याति दुर्लभम् ।
मुखप्रेक्षा चोत्तरतो द्वौ लिङ्गौ तत्र विश्रुतौ[2] ॥
पश्चान्मुखौ तु तौ देवि वृत्रत्वाष्ट्रेश्वरावुभौ ।
काञ्चनीं पृथिवीं दत्त्वा यत्पुण्यं लभते नरः ॥
सुवर्णस्य च यत्पुण्यं लिङ्गयोर्दर्शनेन तत् ।
त्रिरात्रं यः प्रकुरुते तत्रैव वरवर्णिनि ॥
गौरीलोकोऽक्षयस्तस्य पुनरावृत्तिदुर्लभः ।
तस्माद्यत्नः सदा कार्यस्सर्वदर्शनकाङ्क्षया ॥
ललितायाश्चोत्तरेण [3]चर्चिकाऽधिष्ठिता शुभा ।
मानवानां हितार्थाय वरदा सर्वदेहिनाम् ॥
चर्चिकायास्तथैवाऽग्रे तिष्ठते लिङ्गमुत्तमम् ।
पूर्वामुखं तु तद्देवि[4] रेवन्तेन प्रतिष्ठितम् ॥
तस्याऽग्रतो वरारोहे लिङ्गं पञ्चनदीश्वरम् ।
पश्चान्मुखं तु तद्देवि सर्वस्नानफलप्रदम् ॥
ललितायाश्च संलग्नं पूर्वे कूपस्तु तिष्ठति ।
तस्मिन् कूपे जलं स्पृष्ट्वा अतिरात्रफलं लभेत् ॥
ततो दक्षिणतो देवि तीर्थं पञ्चनदं स्मृतम् ।
नरः पञ्चनदे स्नात्वा दृष्ट्वा लिङ्गं गभस्तिनः ॥

1. P. निरीक्षणम्
2. P. सुव्रते B. सुन्दरि
3. B. विविधाष्ठिता
4. B. तल्लिङ्गं रैवतेन [one of the fourteen Manus]

अनन्तं फलमाप्नोति यत्र तत्राऽभिजायते ।
उपमन्युश्च सुश्रोणि लिङ्गं स्थापितवांस्तथा ॥
मुखानि[1] तस्य तिष्ठन्ति तस्मिँल्लिङ्गे यशस्विनि ।
तच्च पश्चान्मुखं देवि ललितादक्षिणेन तु ॥
तेन दृष्टेन देवेशि न पुनर्जन्मभाग्भवेत् ।
तस्यैव तु समीपे तु पश्चिमे वरवर्णिनि ॥
अन्यल्लिङ्गं तु सुश्रोणि व्याघ्रपादप्रतिष्ठितम् ।
तस्य सन्दर्शनाद्देवि[2] सर्वपापैः प्रमुच्यते ॥
गभस्तीशाग्रतो देवि विश्वकर्मप्रतिष्ठितम् ।
अन्यानि तत्र लिङ्गानि स्थापितानि महात्मभिः ॥
गभस्तीशस्य लिङ्गस्य नैर्ऋते वरवर्णिनि ।
शशाङ्केश्वरनामानं लिङ्गं पूर्वामुखं स्थितम् ॥
गन्धर्वनगरं गत्वा राज्ञा चित्ररथेन हि ।
तेन दृष्टेन देवेशि ईप्सितं फलमाप्नुयात् ॥
चित्रेश्वरात् पश्चिमतो लिङ्गं पश्चान्मुखं[3] स्थितम् ।
जैमिनिस्थापितं पूर्वं महापातकनाशनम्[4] ॥
अग्रे तु जैमिनीशस्य कृतं लिङ्गं सुमन्तुना ।
अन्यैश्च ऋषिभिस्तत्र लिङ्गानि सुबहूनि च ॥
तेषां तु दक्षिणे भागे लिङ्गं पश्चान्मुखस्थितम् ।
बुधेश्वरं तथा कोणे सर्वसौख्यप्रदायकम् ॥

1. U reads सुखाति
2. P. सन्दर्शनादेव
3. P and B पूर्वामुखं
4. P and B omit this line and the next four

बुधेश्वरात्तु कोणेन वायव्ये नातिदूरतः ।
रावणेश्वरनामानं[1] स्थापितं राक्षसेन तु ॥
[1]रावणेश्वरपूर्वे तु लिङ्गं देवि चतुर्मुखम् ।
तेन दृष्टेन देवेशि यातुधानैर्न हन्यते ॥
रावणेशाद्दक्षिणतो लिङ्गं पूर्वामुखं स्थितम् ।
वराहेश्वरनामानं सर्वपातकनाशनम् ॥
वराहेशाद्दक्षिणतो लिङ्गं पूर्वामुखं स्थितम् ।
तस्यैवाऽऽराधनाद्देवि षण्मासाद्योगमाप्नुयात् ॥
तस्य दक्षिणदिग्भागे लिङ्गं वै दक्षिणामुखम् ।
गालवेश्वरनामानं गुरुभक्तिप्रदायकम् ॥
गालवेश्वरदेवस्य लिङ्गं पश्चान्मुखं स्थितम् ।
अयोगसिद्धिनामानं सर्वसिद्धिप्रदायकम् ॥
तस्यैव दक्षिणे देवि नाम्ना वातेश्वरं शुभम्[2] ।
तस्यैव चाऽग्रतो देवि मुखलिङ्गं च तिष्ठति ॥
सोमेश्वरेति विख्यातं लिङ्गं पश्चान्मुखं स्थितम् ।
तं दृष्ट्वा देवदेवेशं सर्वव्याधिक्षयो भवेत् ।
तस्यैव नैर्ऋते भागे लिङ्गं पूर्वामुखं[3] स्थितम् ॥
अङ्गारेश्वरनामानं सर्वसिद्धैर्नमस्कृतम् ।
पूर्वेण तस्य देवस्य लिङ्गमन्यच्च तिष्ठति ॥
कुक्कुटेश्वरनामानं गतिसौख्यप्रदायकम् ।
तस्यैव चोत्तरे देवि पाण्डवैः सुमहात्मभिः ॥

1. B. वारणेश्वरनामानम् ?
2. B omits this line
3. B. पश्चान्मुखं

पञ्च लिङ्गानि पुण्यानि पश्चिमाभिमुखानि तु ।
तेषामेतं तु देवेशि लिङ्गं पश्चान्मुखं स्थितम् ॥
संवर्तेश्वरनामानं स्थापितं यन्महर्षिणा ।
ममैवाऽत्यन्तसान्निध्यं तस्मिँल्लिङ्गे सुरेश्वरि ॥
तल्लिङ्गमर्चयेद्यो वै तस्य सिद्धिः करे स्थिता ।
संवर्तेशात् पश्चिमतो लिङ्गं पूर्वामुखं[1] स्थितम् ॥
श्वेतेश्वरं तु विख्यातं श्वेतेन स्थापितं पुरा ।
तेन दृष्टेन लिङ्गेन गाणपत्यं लभेद्ध्रुवम् ॥
पश्चिमे तस्य दिग्भागे कलशेश्वरसंज्ञितम् ।
कलशादुत्थितं लिङ्गं कालस्य भयदायकम् ॥

सूर्य उवाच—

कथं कालस्य भयदं कलशादुत्थितः कथम् ।
एतदेव समाचक्ष्व यदाऽनुग्रहवान् मयि ॥

विष्णुरुवाच—

तस्यैव देवदेवस्य प्रभावं शृणु भास्कर ।
श्वेतो नाम महातेजा ऋषिः परमधार्मिकः ॥
पूजयामास सततं लिङ्गं त्रिपुरघातिनः ।
तस्य पूजाप्रसक्तस्य कदाचित्कालपर्यये ॥
आजगाम[2] तमुद्देशं कालः परमदारुणः ।
रक्तान्तनयनो घोरः [3]सर्पयष्टिकरो महान् ॥

1. B. पश्चान्मुखं
2. B. आजगाममनुद्देशं
3. P and B सार्पियष्टिकरो

दंष्ट्राकरालो विकृतो भिन्नाञ्जनसमप्रभः[1]।
रक्तवासा महाकायः सर्वाभरणभूषितः ॥
पाशहस्तस्तदाऽभ्येत्य श्वेते पाशमवासृजत्।
कण्ठार्पितेन पाशेन श्वेतः कालमथाऽब्रवीत् ॥
क्षणमात्रं प्रतीक्षस्व मम त्रिभुवनान्तक।
निवर्तयाम्यहं यावत् पूजनं मन्मथद्विषः ॥
तमब्रवीत्तदा कालः प्रहसन् वै सुरेश्वर।
न श्रुतं तत्त्वया मन्ये वृद्धानां ज्ञातजन्मनाम्[2] ॥
श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चाऽपराह्णिकम्।
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम् ॥
गर्भे वाऽप्यथवा बाल्ये वार्द्धके यौवने तथा[3]।
आयुष्ये कर्मणि क्षीणे लोकोऽयं लीयते मया ॥
नौषधानि न मन्त्राश्च न होमा न पुनर्जयः।
त्रायन्ते मृत्युनोपेतं जरया वाऽपि मानवाः ॥
बहूनीन्द्रसहस्राणि पितामहशतानि च।
मयाऽतीतानि कर्तव्यो नाऽत्र मन्युस्त्वयाऽनघ ॥
विधत्स्व पूजनं चाऽस्य महादेवस्य शूलिनः।
देहन्यासो बहुविधो मया वै श्वेत कारितः ॥
स्वयं प्रभुर्न चैवाऽहं कर्मायत्तगतिर्मम।
कर्मणा हि तथा नाशो नाऽस्ति भूतस्य कस्यचित् ॥
कर्ममार्गानुसारेण धात्राऽहं संप्रयोजितः।

1. B. भिन्नाञ्जनचयप्रभः
2. P and B तात जल्पताम्
3. B. यौवनेऽथवा

नयामि सर्वमाक्रम्य नीयमानस्त्रिलोचने[1] ॥
एवमुक्तस्तु कालेन नीयमानस्त्रिलोचनम् ।
जगाम सर्वभावेन शरणं भक्तवत्सलम् ॥
श्वेते तु शरणं प्राप्ते लिङ्गं सत्रिपुरान्तकम् ।
चिन्तयामास कालस्य वधोपायं सुरेश्वरः ॥
कलशं यत् स्थितं तस्य उदकेन प्रपूरितम् ।
तं भित्त्वा तु समुत्तस्थौ क्रोधविस्फारितेक्षणः ॥
तृतीयलोचनज्वालाप्रकाशितजगत्त्रयः ।
दृष्टमात्रस्तदा तस्य कालो वीक्षणतेजसा ॥
सहसा भस्मभूतः[2] स सर्वभूतनिबर्हणः ।
श्वेतस्य गत्वा सामीप्यं गणेशत्वं तथैव च ॥
कृत्वा विनिग्रहं कालं तत्रैवाऽन्तरधीयत ।
ततः प्रभृति देवेशि कालः [3]सङ्कलयेत् प्रजाः ॥
न कश्चित् पश्यते लोके विदेहत्वाज्जगत्त्रये ।
तस्मात्तत्र स्वयंभूतो देवदेवः सुरारिहा ॥
श्वेतस्य कलशं भित्त्वा कलशेश्वरमुच्यते ।
तस्मात्तत्र स्थितं देवं यो निरीक्षति मानवः ॥
जन्ममृत्युजराव्याधिर्नश्यते तस्य भामिनि ।
यत्र श्वेतकृतं लिङ्गं भक्त्या योऽर्चयते नरः ॥
जन्ममृत्युभयं भित्त्वा संसारं न विशेत्पुनः ।

॥ इति श्रीलिङ्गपुराणे वाराणसीमाहात्म्ये गुह्यायतनवर्णने
द्वादशोऽध्यायः ॥

1. B. त्रिलोचनः

2. B. भस्मसाद्भूतः

3. B. सङ्कालयत्

ईश्वर उवाच—

उत्तरे तस्य देवस्य चित्रगुप्तेश्वरं स्थितम् ।
पश्चिमाभिमुखं देवं वाराणस्यां सुरेश्वरि ॥
चित्रगुप्तं न पश्येत योऽत्र द्रक्ष्यति मानवः ।
पश्चिमे चित्रगुप्तस्य अन्यल्लिङ्गं स्थितं शुभे ॥
छायया स्थापितं लिङ्गं तं दृष्ट्वा नाऽऽतपं भवेत् ।
विनायकश्च तत्रैव पश्चिमेन यशस्विनि ॥
तस्य दर्शनमात्रेण विघ्नैर्नैवाऽभिभूयते ।
कुण्डं तस्य तु पूर्वेण लिङ्गं पश्चान्मुखं स्थितम् ॥
मुखलिङ्गं तु तद्देवि विरूपाक्षं स्वयं प्रिये ।
दक्षिणेन तु तस्यैव कूपस्तिष्ठति भामिनि ॥
दर्शनात्तस्य कूपस्य यमद्वारं न पश्यति ।
कूपं चाऽपि स्थितं तत्र उपस्पर्शनपुण्यदम् ॥
अन्यानि तत्र लिङ्गानि सुरैः संस्थापितानि च ।
दक्षिणे कलशेशस्य लिङ्गं पश्चान्मुखं स्थितम् ॥
गुहेश्वरेति नामानं सर्वपुण्यफलप्रदम् ।
तस्यैव दक्षिणे पार्श्वे द्वावेतौ तत्र संस्थितौ[1] ॥
उत्तमेश्वरनामानं वामदेवमतः परम् ।
तस्यैव पश्चिमे देवि लिङ्गं पश्चान्मुखं स्थितम् ॥
कम्बलाश्वतराक्षं तु गन्धर्वपददायकम् ।
अपरं तस्य देवस्य लिङ्गं पश्चान्मुखं स्थितम् ॥
नलकूबरेश्वरं नाम सर्वसिद्धिप्रदायकम् ।

1. B omits this line and the next

तस्यैव दक्षिणे देवि मणिकर्णी[1] च विश्रुता ॥
तस्य चाऽग्रे महत्तीर्थं सर्वपातकनाशनम् ।
मणिकर्णीश्वरं देवं कुण्डमध्ये च तिष्ठति ॥
अनेनैव तु देहेन सिध्यते तस्य दर्शनात् ।
तस्य चोत्तरदिग्भागे लिङ्गं पश्चान्मुखं स्थितम् ॥
परिमेश्वरनामानं पूजनादजरो भवेत् ।
तस्यैव च समीपस्थं लिङ्गं पश्चान्मुखं स्थितम् ॥
धर्मराजेन सुश्रोणि स्थापितं पापनाशनम् ।
तस्यैव पश्चिमे देवि लिङ्गमन्यच्चतुर्मुखम् ॥
निर्जरेश्वरनामानं व्याधीनां नाशनं परम् ।
तस्य नैर्ऋतकोणे तु लिङ्गं पूर्वामुखं स्थितम् ॥
पितामहाश्चाऽतिकायाः स्नाता ये शुभकर्मिणः ।
पिण्डं दत्त्वा तथोक्तं च दृष्ट्वा देवं नदीश्वरम् ॥
ब्रह्मलोकात्तु ते पुण्या न च्यवन्ति कदाचन ।
दक्षिणे तस्य देवस्य लिङ्गमन्यच्च तिष्ठति ॥
वारुणेश्वरनामानं स्थापितं वरुणेन हि ।
तस्य दक्षिणपार्श्वे तु लिङ्गं पश्चान्मुखं स्थितम् ॥
बाणेन दैत्यराजेन स्थापितं मम भक्तितः ।
तस्यैव दक्षिणे देवि लिङ्गं पश्चान्मुखं स्थितम् ॥
कूष्माण्डेश्वरनामानं सर्वधर्मफलप्रदम् ।
तस्यैव पूर्वतो देवि राक्षसेन प्रतिष्ठितम् ॥
तस्य दक्षिणपार्श्वे तु गङ्गया स्थापितेन तु ।

1. P and B मणिकन्या

गङ्गेश्वरेति नामानं सुरलोकप्रदायकम् ॥
तस्योत्तरेण देवेशि निम्नगाभिस्ततः शुभे ।
लिङ्गानि स्थापितानीह गङ्गातीरे यशस्विनि ॥
वैवस्वतेश्वरं नाम दृष्ट्वा मृत्युभयापहम् ।
वैवस्वतात्पश्चिमे तु लिङ्गं पश्चान्मुखं स्थितम् ॥
आदित्यैः स्थापितं भद्रे आत्मनः श्रेयसोऽर्थिभिः ।
तस्यैव चाऽग्रतो भद्रे लिङ्गं पश्चान्मुखं स्थितम् ॥
वज्रेश्वरेति नामाख्यं सर्वपातकनाशनम् ।
तस्यैव चाऽग्रतो भद्रे लिङ्गं पश्चान्मुखं स्थितम् ॥
कनकेश्वरनामानं गुह्यं[1] देवि सनातनम् ।
छायेव दृश्यते लिङ्गे स्थाप्यमाने यशस्विनि ॥
छायां च पश्यते यो वै न स पापेन लिप्यते ।
तस्यैव चाऽग्रतो देवि लिङ्गं पूर्वामुखं स्थितम् ॥
तारकेश्वरनामानं सर्वपापहरं शुभम् ।
पूजनाच्चाऽस्य लिङ्गस्य ज्ञानावाप्तिर्भवेन्नृणाम् ॥
अपरं तत्र देवेशि कनकेश्वरसंज्ञितम् ।
पूजनात्स्वयमेवाऽत्र हिरण्यं संप्रयच्छति ॥
कनकेश्वरस्योत्तरेण नाम्ना [2]च मनुजेश्वरम् ।
मुखलिङ्गं पश्चिमतः सर्वपापप्रणाशनम् ॥
तस्यैव चाऽग्रतो देवि लिङ्गं पूर्वामुखं स्थितम् ।
इन्द्रेण स्थापितं देवि मम भक्त्या प्रतिष्ठितम् ॥

1. P. गुप्तं
2. P. दमकतेश्वरम्

तस्य दर्शनमात्रेण देवि ज्ञानं प्रवर्तते ।
तस्यैव दक्षिणे देवि रम्भया संप्रतिष्ठितम् ॥
मुखलिङ्गं च तं देवि दक्षिणाभिमुखं स्थितम् ।
इन्द्रेश्वरस्योत्तरेण लिङ्गं पश्चान्मुखं स्थितम् ॥
शच्या च स्थापितं भद्रे देवराजस्य भार्यया ।
तस्योत्तरदिशाभागे लोकपालैः प्रतिष्ठितम् ॥
अन्यानि तत्र लिङ्गानि देवासुरमरुद्गणैः ।
यक्षैर्नागैश्च गन्धर्वैः किन्नराप्सरसां गणैः ॥
लोकपालैः सुरैश्चैव लिङ्गानि स्थापितानि तु ।
तस्यैव दक्षिणे लिङ्गं महापातकनाशनम् ॥
पूर्वामुखं तु तं भद्रे फाल्गुनेन प्रतिष्ठितम् ।
तस्य दक्षिणदिग्भागे महापाशुपतेश्वरम् ॥
तेन दृष्टेन देवेशि सर्वज्ञानस्य भाजनम् ।
तस्यैव पश्चिमे देवि समुद्रेण प्रतिष्ठितम् ॥
तस्यैव दक्षिणे पार्श्वे [1]ईशानं लोकविश्रुतम् ।
आत्मानमुद्धरेद्देवि लिङ्गं पश्चान्मुखं स्थितम् ॥
तस्याऽपि देवि पूर्वेण वाराणस्यां तु लाङ्गलिः ।
मोक्षप्रदं तु तल्लिङ्गं सर्वैश्वर्यमयं[2] शुभम् ॥
ज्ञात्वा कलियुगं घोरं हाहाभूतमचेतनम् ।
ब्राह्मणानां हितार्थाय तस्मिन् देशे स्थितो ह्यहम् ॥
दिव्या हि सा परा मूर्तिर्दिव्यज्ञानं हि तत् स्मृतम् ।
अनुग्रहाय विप्राणां योजयिष्ये व्रतेन तु ॥

1. P. ऐशानं
2. P. सर्वाश्चर्यमयं

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ।
एतेषां हि विभेदस्तु भिन्नाश्चैव पृथक् पृथक् ॥
ज्ञानेन रहिताः सर्वे पुनरावर्तकाः स्मृताः ।
ब्राह्मणानां हितार्थाय ज्ञानं चैव प्रकाशितम् ॥
वेदाः सर्वे समादाय षडङ्गाः सपदक्रमाः ।
सर्वाणि योगशास्त्राणि दध्ना चैव घृतेन च ॥
तथा वेदे महाभागे व्रतं पाशुपतं प्रिये ।
षण्मासैस्तु महाभागे योगैश्वर्यं प्रवर्तते ॥
[1]यस्य यस्य प्रभावोऽस्ति योगस्यैव व्रतस्य च ।
[2]योगज्ञेषु हि तिष्ठेत [3]धर्मं सुखं हि तेषु च ॥
ब्राह्मणानां समो धर्मो दमो वाऽथ यशस्विनि ।
अहिंसा चैव सत्यं च विद्याभिगम एव च ॥
मैत्रो वै ब्राह्मणो नित्यं गतिं प्राप्नोति चोत्तमाम् ।
भस्मशायी तु तिष्ठेत अन्तस्सवनकृत्तथा ॥
लिङ्गनिर्माल्यधारी च यतिस्स्वायतने वसेत् ।
जपगीतहुडुङ्कारस्तुतिकृत्यपरः सदा ॥
भावनाद्देवदेवस्य दक्षिणां [4]मूर्तिमास्थितः ।
[5]अकस्मात्तत्र मूत्रं तु पुरीषं वा न संक्षिपेत् ॥
स्त्रीशूद्रौ नाऽभिभाषेत शूद्रान्नं वर्जयेत् सदा ।
शूद्रान्नरसपुष्टस्य निष्कृतिस्तस्य कीदृशी ॥

1. B. कश्यपस्य
2. P. B. यो यज्ञेषु
3. B. धर्मस्य च हितेषु च
4. B. मतिमाश्रिता
5. आवसं मूत्रमूत्रन्तु

अमृतं ब्राह्मणस्याऽन्नं क्षत्रियान्नं पयः स्मृतम् ।
वैश्यान्नमन्नमित्याहुः शूद्रान्नं रुधिरं स्मृतम् ॥
तस्माद्वर्जेत तद्देवि यदीच्छेन्मामकं पदम् ।
श्मशानवासी धर्मात्मा यथा लब्धेन वर्तते ॥
लभेत रुद्रसायुज्यं सदा रुद्रमनुस्मरन् ।
षण्मासाल्लभते [1]ज्ञानमस्मिन् क्षेत्रे विशेषतः ॥
नित्यं पूजयते देवं ध्रुवं मोक्षं न संशयः ।
रागद्वेषविनिर्मुक्ताः सिद्धायतनपूजकाः ॥
तेषां मोक्षो मयाऽऽख्यातस्तत्र यैर्मानुषैः कृताः ।
द्वाविंशे परिवर्ते तु वाराणस्यां महाव्रते ॥
नाम्ना तु नकुलीशेति तस्मिन् स्थाने स्थितो ह्यहम् ।
द्रक्ष्यन्ति मां कलौ तस्मिन्नवकीर्णे दिवौकसः ॥
अत्र स्थानेऽपि देवेशि मम पुत्रा दिवौकसः[2] ।
वक्त्रानिर्मधुपिङ्गश्च श्वेतकेतुस्तथाऽपरः ॥
अस्मिन् माहेश्वरं योगं प्राप्य योगगतिं पराम् ।
नकुलीशाख्यदेवस्य लिङ्गं पूर्वामुखं स्थितम् ॥
चतुर्भिः पुरुषैर्युक्तं तल्लिङ्गं तच्च संस्थितम् ।
तद्दृष्ट्वा मानवो देवि रुद्रस्यैव सलोकताम् ॥
नकुलीशेश्वरं देवं कपिलेश्वरमेव च ।
पञ्चायतनमेतत्तु यत्तु पूर्वमुदाहृतम् ॥

1. B. लभतेशानम्
2. P. महायशाः    B. महौजसः

रहस्यं परमं वेदं[1] मम व्रतनिषेवणम् ।
तेषां न कथनीयोऽहं ये मद्भक्तिविवर्जिताः ॥
शक्रः पाशुपते चोक्तं पदे सम्यङ्निषेवितम् ।
तत् पदं विन्दते देवि दृष्टैरेव न संशयः ॥
प्रीतिमान् सततं देवि एभिर्दृष्टैश्च जायते ।
अविमुक्तं महाक्षेत्रं सिद्धसङ्घनिषेवितम् ॥
अत्र पूजयते देवि ध्रुवं मोक्षो न संशयः ।
सिद्धिकामास्तथा सिद्धिं यास्यन्ति द्विजसत्तमाः ॥
इह दत्तं सदाऽक्षय्यं[2] भविष्यति महात्मनाम् ।
द्विजानां धर्मनित्यानां मम व्रतनिषेविणाम् ॥
एकाहमुपवासं यः करिष्यति यशस्विनि[3] ।
फलं वर्षशतस्येह लभते मत्परायणः ॥

॥ इति श्रीलिङ्गपुराणे वाराणसीमाहात्म्ये गुह्यायतन-
वर्णनं नाम त्रयोदशोऽध्यायः ॥

ईश्वर उवाच—

अन्यदायतनं वक्ष्ये वाराणस्यां सुरेश्वरि ।
यत्र वै देवदेवस्य रुचिरं स्थानमीप्सितम् ॥
नीयमानं पुरा देवि तल्लिङ्गं शशिमौलिनः ।
राक्षसैरन्तरिक्षस्थैर्व्रजमानं सुसत्वरम्[4] ॥
अस्मिन् देशे यदाऽऽयातास्तदा देवेन चिन्तितम् ।
अविमुक्ते न मोक्षस्तु कथं मे संभविष्यति ॥

1. P. देवि
2. P. सदा ज्यायां B. सदा यायात्
3. P. मनस्विनः
4. P. समन्ततः

इममर्थं तु देवेशो यावच्चिन्तयते प्रभुः ।
तावत् कुक्कुटशब्दस्तु तस्मिन् देशे समुत्थितः ॥
शब्दं श्रुत्वा तु तं देवि राक्षसास्त्रस्तचेतसः ।
लिङ्गमुत्सृज्य भीतास्ते प्रभातसमये गताः ॥
गतैस्तु राक्षसैर्देवि लिङ्गं तत्रैव संस्थितम् ।
स्थाने तु रुचिरे शुभ्रे देवदेवः स्वयं प्रभुः ॥
अविमुक्तस्तत्र मध्ये अविमुक्तं ततः स्मृतम् ।
तदाऽविमुक्ते तु सुरैर्हरस्य
नाम स्मृतं पुण्यतमाक्षराढ्यम् ।
मोक्षप्रदं स्थावरजङ्गमानां
ये प्राणिनः पञ्चतां तत्र याताः ॥
कुक्कुटाश्चाऽपि देवेशि तस्मिन् स्थाने स्थिताः सदा ॥
अद्याऽपि तत्र दृश्यन्ते पूज्यमानाः शुभार्थिभिः ।
अविमुक्तं सदा लिङ्गं योऽत्र द्रक्ष्यति मानवः ॥
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ।
देवस्य दक्षिणे भागे वापी तिष्ठति शोभना ॥
तस्यास्तथोदकं पीत्वा पुनर्जन्म न विद्यते ।
पीतमात्रेण तेनैव उदकेन यशस्विनि ॥
त्रीणि लिङ्गानि वर्धन्ते हृदये पुरुषस्य तु ।
एतद्गुह्यं महादेवि न देयं यस्य कस्यचित् ॥
दण्डपाणिस्तु तत्रस्थो रक्षते तज्जलं सदा ।
पश्चिमं तीरमासाद्य देवदेवस्य शासनात् ॥
पूर्वेण तारको देवो जलं रक्षति सर्वदा ।

नन्दीशश्चोत्तरेणैव महाकालस्तु दक्षिणे ॥
रक्षते तज्जलं नित्यं मद्भक्तानां तु मोहनम् ।

विष्णुरुवाच—

ममाऽपि सा परा देवि तनुरापोमयी शुभा ॥
अप्राप्या दुर्लभा देवि मानवैरकृतात्मभिः ।
यैस्तु तत्र जलं पीतं कृतार्थास्ते तु मानवाः ॥
तेषां तु तारकं ज्ञानमुत्पत्स्यति न संशयः ।
वापीजले[1] नरः स्नात्वा दृष्ट्वा वै दण्डनामकम् ॥
अविमुक्तं ततो दृष्ट्वा कैवल्यं लभते क्षणात् ।

स्कन्दपुराणे—

अविमुक्तेश्वरं नाम तच्छ्मशानं विमुक्तये ।
जैगीषव्येण मुनिना यत्र रुद्रोऽभिराधितः ॥
यत्र सन्ध्यामुपासित्वा ब्राह्मणः सकृदेव तु ।
सन्ध्यामुपास्तवानस्माच्च षड्वर्षसमाः समाः (?) ॥
पुरीं वाराणसीं तां तु श्मशानं चाऽविमुक्तकम् ।
अविमुक्तेश्वरं तं च दृष्ट्वा गणपतिर्भवेत् ॥

मत्स्यपुराणे दण्डपाणिवरप्रदाने—

देवदेव उवाच—

[2]जरामरणसंत्यक्तः सर्वशोकविवर्जितः ।
भविष्यति गणाध्यक्षो वरदः सर्वपूजितः ॥

1. P. जलैः
2. १८०, ९५-९८.

अजेयश्चाऽपि सर्वेषां योगैश्वर्यसमन्वितः ।
अन्नदश्चाऽपि लोकेभ्यः क्षेत्रपालो भविष्यति ॥
महाबलो महासत्त्वो ब्राह्मणो मम च प्रियः ।
अक्षश्च दण्डपाणिश्च महायोगी तथैव च ॥
[1]उद्भ्रमः संभ्रमश्चैव गणौ ते परिचारकौ ।
तवाऽऽज्ञया करिष्येते लोकस्योद्भ्रमसंभ्रमौ[2] ॥

तथा—

[3]देवब्राह्मणविद्विष्टा देवभक्तिविदण्डकाः ।
ब्रह्मघ्नाश्च कृतघ्नाश्च तथा नैकृतिकाश्च[4] ये ॥
लोकद्विष्टा गुरुद्विष्टा तीर्थायतनदूषकाः ।
सर्वपापरताश्चैव ये चाऽन्ये कुत्सिता भुवि ।
तेषां नास्तीति वासो वै स्थितो वै दण्डनायकः ॥
रक्षणार्थं नियुक्तं वै दण्डनायकमुत्तमम् ।
पूजयित्वा यथाशक्ति गन्धपुष्पादिधूपकैः ॥
नमस्कारं तु तं कृत्वा नायकस्य तु मन्त्रवित् ।
सर्ववर्णावृतक्षेत्रे नानाविधसरीसृपे ॥
ईश्वरानुगृहीता हि गतिं गाणेश्वरीं गताः ।

लिङ्गपुराणे—

अविमुक्तस्य चाऽग्रे तु लिङ्गं पश्चान्मुखं स्थितम् ।
प्रीतिकेश्वरनामानं प्रीतिं यच्छति शाश्वतीम् ॥

1. P. उद्धूम  B. उद्भव
2. P. लोकस्योद्धूमसंभ्रमौ
3. १८५, ४६-५०
4. P. वैकृतिकाश्च

अविमुक्तोत्तरेणैव लिङ्गं पश्चान्मुखं स्थितम् ।
अविमुक्तं च तं देवि नाम्ना वै मोक्षकेश्वरम् ॥
तेन दृष्टेन देवेशि ज्ञानवान् जायते नरः ।
तस्य चोत्तरतो देवि लिङ्गं चैव चतुर्मुखम् ॥
वरुणेश्वरनामानं पापानां भयमोचनम् ।
पूर्वेण तस्य संलग्नं मुखलिङ्गं च तिष्ठति ॥
सुवर्णाक्षेश्वरं नाम यज्ञानां फलदायकम् ।
तस्य चैवोत्तरे गौरी स्वयं तिष्ठति पुण्यदा ॥
तस्यास्तु दर्शनाद्देव्याः सौभाग्यं जायते परम् ।
दक्षिणे तस्य देवस्य निकुम्भो नाम वै गणः ॥
तं दृष्ट्वा मानुषो देवि क्षेत्रवासं तु विन्दति ।
विनायकश्च तत्रैव पश्चिमेन यशस्विनि ॥
तस्य दर्शनमात्रेण विघ्नैर्नैवाऽभिभूयते ।
निकुम्भस्य तु पूर्वेण लिङ्गं पश्चान्मुखं स्थितम् ॥
मुखलिङ्गं तु तं देवि विजयाख्यं स्वयं प्रिये ।
दक्षिणेन तु तत्रैव शुक्रेश्वरमिति स्मृतम् ॥
मुखलिङ्गं तु तं भद्रे शुक्रेण स्थापितं पुरा ।
पूर्वामुखं तु तं भद्रे शिवशोकप्रदायकम् ॥
तस्यैव चोत्तरे देवि मुखलिङ्गं च तिष्ठति ।
पश्चान्मुखं तु तं देवि देवयान्या तु स्थापितम् ॥
तस्यैव चाऽग्रतो भद्रे लिङ्गं पश्चान्मुखं स्थितम् ।
कचेन स्थापितं भद्रे देवाचार्यस्य सूनुना ॥

तस्यैव च समीपे तु कूपस्तिष्ठति सुव्रते[1] ।
तस्योपस्पर्शनाद्देवि सर्वमेधफलं लभेत् ॥
तस्यैव पश्चिमे भागे देवो देवी च तिष्ठतः ।
भक्तिदौ तौ तु सर्वेषां येऽपि दुष्कृतिनो नराः ॥
शुक्रेश्वरस्य पूर्वेण लिङ्गं पश्चान्मुखं स्थितम् ।
अनर्केश्वरनामानं मोक्षदं सर्वदेहिनाम् ॥
तस्यैव पूर्वतो भागे[2] गणैस्तु परिवारितम् ।
गणेश्वरमिति ख्यातं सर्वहर्षप्रदायकम् ॥

॥ इति श्रीलिङ्गपुराणे वाराणसीमाहात्म्ये गुह्यायतन-
वर्णनं नाम चतुर्दशोऽध्यायः ॥

ईश्वर उवाच—

अन्यदायतनं वक्ष्ये वाराणस्यां सुरेश्वरि ।
रामेण स्थापितं लिङ्गं लङ्कायाश्चाऽऽगतेन हि ॥
तस्य दक्षिणपार्श्वे तु लिङ्गं पूर्वामुखं स्थितम् ।
त्रिपुरान्तकरं नाम सर्वपापप्रणाशनम् ॥
तस्यैव दक्षिणे लिङ्गं दत्तात्रेयप्रतिष्ठितम् ।
ज्ञानं चोत्पद्यते देवि तस्य लिङ्गस्य दर्शनात् ॥
तस्य पश्चिमदिग्भागे हरिकेशेश्वरं शुभम् ।
तत्रैवाऽऽराधितो देवि हरिकेशेन सुव्रते ॥
हरिकेशेश्वरं देवं सर्वकिल्बिषनाशनम् ।
तस्य पश्चिमदिग्भागे गोकर्णं नाम विश्रुतम् ॥

1. B. सुन्दरि
2. P. भद्रे

तत्र स्नातो वरारोहे राजते देवि[1] चन्द्रवत् ।
पश्चिमाभिमुखं लिङ्गं काशिपुर्यां च सुव्रते ॥
उत्तरं सर्वसिद्धानामनन्तफलदायकम् ।
देवदेवस्य चैवाऽग्रे तडागं देवविश्रुतम् ॥
तत्र स्नातो वरारोहे राजते देवि चन्द्रवत्[2] ।
तस्यैव पश्चिमे तीरे लिङ्गं पूर्वामुखं स्थितम् ॥
देवेन स्थापितं भद्रे मम भक्तिपरेण वै ।
तस्यैव चाऽग्रतो देवि कुण्डं तिष्ठति भामिनि ॥
तस्मिन् स्नातो वरारोहे देवलोकमवाप्नुयात् ।
देवेश्वरस्योत्तरेण पिशाचैः स्थापितं पुरा ॥
पिशाचेश्वरनामानं मोक्षदं सर्वदेहिनाम् ।
ध्रुवेशस्याऽग्रतो देवि मुखलिङ्गं च तिष्ठति ॥
पश्चान्मुखं तु तल्लिङ्गं तीरे कुण्डस्य भामिनि ।
वैद्यनाथं तु तं विद्यात् सर्वसौख्यप्रदायकम् ॥
तस्यैव नैर्ऋते भागे मनुना स्थापितं पुरा ।
[3]पूर्वामुखं तु तल्लिङ्गं तस्य कुण्डस्य दक्षिणे ॥
तेन दृष्टेन सुश्रोणि सर्वपापक्षयो भवेत् ।
वैद्यनाथस्य पूर्वेण लिङ्गं पूर्वामुखं स्थितम्[4] ॥
मुचुकुन्देश्वरं नाम देवानां तु वरप्रदम् ।
प्रियव्रतस्य तद्देवि सर्वयज्ञफलप्रदम् ॥

1. B. दिवि
2. P omits the line
3. Eight lines beginning with this are missing in B.
4. P adds here:
प्रियव्रतस्य तद्देवि सर्वयज्ञफलप्रदम् ।
तस्यैव दक्षिणे देवि लिङ्गं पूर्वामुखं स्थितम् ॥

तस्यैव दक्षिणे देवि लिङ्गं पूर्वामुखं स्थितम् ।
सर्वपापप्रशमनं गौतमेशं च नामतः ॥
तेन दृष्टेन देवेशि सामवेदफलं लभेत् ।
तस्यैव [1]दक्षिणे देवि विभाण्डेश्वरसंज्ञितम् ॥
ऋष्यशृङ्गेश्वरं नाम तस्य दक्षिणतः स्थितम् ।
तस्यैव पूर्वतो देवि ब्रह्मेश्वरमिति स्मृतम् ॥
ब्रह्मेश्वराच्च कोणेन पिशाचेश्वरसंज्ञितम् ।
पश्चिमाभिमुखं देवि पर्जन्येश्वरनामतः ॥
पर्जन्येश्वरनामानं भुक्तिमुक्तिफलप्रदम् ।
पर्जन्येश्वरपूर्वेण नाम्ना तु नहुषेश्वरम् ॥
नहुषेश्वरपूर्वेण देवदेवी च तिष्ठति ।
विशालाक्षीति विख्याता भक्तानां तु फलप्रदा ॥
तस्यैव दक्षिणे भागे जरासन्धेश्वरं स्थितम् ।
चतुर्मुखं तु तल्लिङ्गं दृष्ट्वा देवि फलप्रदम् ॥
तस्यैव दक्षिणे देवि भोगदा सर्वदेहिनाम् ।
भोगा ललितका देवि सर्वसिद्धिप्रदायिका ॥
जरासन्धेश्वरस्याऽग्रे लिङ्गं पूर्वामुखं स्थितम् ।
हिरण्याक्षेश्वरं नाम हिरण्यफलदायकम् ॥
तस्यैव दक्षिणे लिङ्गं ययातीश्वरनामतः ।
पूर्वामुखं तु तल्लिङ्गं सर्वकामफलप्रदम् ॥
तस्यैव पश्चिमे भागे ब्रह्मेशस्य समीपतः ।

1. P. पश्चिमे

पश्चान्मुखं तु तल्लिङ्गं दृष्ट्वा [1]वेदफलं लभेत्[2] ॥
अगस्त्यस्य समीपे तु मुखलिङ्गं तु तिष्ठति ।
विश्वावसुस्तु गन्धर्वो लिङ्गं स्थापितवान् पुरा ॥
अगस्त्येश्वरपूर्वेण मुण्डेशो नाम नामतः ।
पश्चान्मुखं तु तल्लिङ्गं वीरसिद्धिप्रदं नृणाम् ॥
तस्यैव दक्षिणे देवि विधिस्तिष्ठति पार्वति ।
विधिना स्थापितं लिङ्गं पश्चिमाभिमुखं स्थितम् ॥
विधीश्वराद्दक्षिणेन तीर्थं सर्वत्र विश्रुतम् ।
दशाश्वमेधिकं नाम लिङ्गं तत्र स्वयं स्थितम् ॥
तं दृष्ट्वा मानवो देवि अश्वमेधफलं लभेत् ।
दशाश्वमेधाच्चोत्तरतो मातरस्तत्र संस्थिताः ॥
तासां मुखे तु तत्कुण्डं तिष्ठते वरवर्णिनि ।
तत्र स्नानं नरः कुर्यान्नारी वा पुरुषोऽपि वा ॥
ईप्सितं फलमाप्नोति मातॄणां च प्रसादतः ।
अगस्त्येशाद्दक्षिणतो लिङ्गं पूर्वामुखं स्थितम् ॥
पुलस्त्येश्वरनामानं सर्वारोग्यविवर्धनम् ।
तस्य दक्षिणदिग्भागे लिङ्गमन्यच्च तिष्ठति ॥

1. P. देवि फलप्रदम् ।
2. P and B suppliy here these verses
तस्यैव चाऽग्रतो देवि लिङ्गं पूर्वामुखं स्थितम् ।
दिलीपेश्वरनामानमिष्टापूर्तफलप्रदम् ॥
ब्रह्मेश्वरात् पश्चिमेन अगस्त्येशमिति स्मृतम् ।
पूर्वामुखं कृतं देवि अगस्त्येन महर्षिणा ॥

पुष्पदन्तेश्वरं नाम सर्वसिद्धिप्रदायकम् ।
[1]तस्यैवाऽग्रे तु कोणे तु लिङ्गानि सुमहान्ति च ॥
देवर्षिगणपुष्टानि[2] सर्वसिद्धिकराणि च ।
तस्यैव पूर्वदिग्भागे महदाश्चर्यदायकम् ॥
पञ्चोपचारपूजायां स्वप्नसिद्धिं करिष्यति ।
लिङ्गं सिद्धेश्वरं नाम पूर्वाभिमुखसंस्थितम् ॥

॥ इति श्रीलिङ्गपुराणे वाराणसीमाहात्म्ये गुह्यायतन-
वर्णनं नाम पञ्चदशोऽध्यायः ॥

[3]ईश्वर उवाच—

अन्यच्चैव प्रवक्ष्यामि हरिश्चन्द्रेश्वरं शुभम् ।
यत्र सिद्धो महात्मा वै हरिश्चन्द्रो महाबलः ॥
तं दृष्ट्वा मानवो देवि रुद्रस्य पदमाप्नुयात् ।
पूर्वामुखं तु तल्लिङ्गं स्वर्गलोकप्रदायकम् ॥
हरिश्चन्द्रेश्वराद्देवि अन्यल्लिङ्गं तु पश्चिमे[4] ।
पूर्वामुखं तु तं देवि नाम्ना वै नैर्ऋतेश्वरम् ॥
तस्य सन्दर्शनाद्देवि कैवल्यं ज्ञानमाप्नुयात् ।
तस्यैव दक्षिणे लिङ्गं पूर्वामुखमवस्थितम् ॥
नाम्ना ह्याङ्गिरसेशं तद्वैराग्यसुखदायकम् ।
तस्यैव दक्षिणे देवि क्षेमेश्वरमनुत्तमम् ॥

1. P. तस्यैवाऽऽग्नेयकोणे तु
2. P. जुष्टानि
3. P omits ईश्वर उवाच
4. P. तिष्ठति

[[1]तस्य दक्षिणदिग्भागे केदारं नाम विश्रुतम् ।
तं दृष्ट्वा मनुजो देवि रुद्रस्याऽनुचरो भवेत् ॥
केदाराद्दक्षिणे चैव लिङ्गं पूर्वामुखं स्थितम् ।
नीलकण्ठेति नामानं सुरलोकप्रदायकम् ॥
तस्यैव वायवे कोणे अम्बरीषेश्वरं शुभम् ।]
तस्य दक्षिणदिग्भागे लिङ्गं वै दक्षिणामुखम् ॥
नाम्ना कालञ्जरं[2] देवं सर्वपातकनाशनम् ।
तस्यैव दक्षिणे भागे लोलार्को नाम वै रविः[3] ॥
तस्य दर्शनमात्रेण सूर्यलोकमवाप्नुयात् ।
लोलार्कात् पश्चिमे भागे दुर्गादेवी च तिष्ठति ॥
मानवानां हितार्थाय कूटे क्षेत्रस्य[4] दक्षिणे ।
दुर्गायाः पश्चिमे देवि लिङ्गं पूर्वामुखं स्थितम् ॥
असितेन च तद्देवि भक्त्या वै संप्रतिष्ठितम् ।
शुष्कनद्यास्तु [5]नाम्ना वै शुष्केश्वरमिति स्मृतम् ॥

1. P. The three ślokas which follow are missing in the Udaipur Ms. B supplies:—

तस्यैव दक्षिणे देवि क्षेमेश्वरमनुत्तमम् ।
तस्य दक्षिणदिग्भागे चित्राङ्गेश्वरसंज्ञितम् ॥
चित्राङ्गदेन देवेशि विधिना संप्रतिष्ठितम् ।
तस्य पूजानमस्कारैः गन्धर्वाधिपतिर्भवेत् ॥

2. P and B कलिञ्जरम्
3. P. विश्रुतम्
4. P. कूटक्षेत्रस्य
5. P. तत्रावै (?)

शुष्केश्वरात् पश्चिमेन नाम्ना तु जनकेश्वरम् ।
जनकेन महाभागे भक्त्या चाऽपि प्रतिष्ठितम् ॥
पश्चान्मुखं तु तल्लिङ्गं दर्शनादव्ययथः शुभे ।
तस्यैव चोत्तरे भागे नातिदूरे यशस्विनि ॥
शङ्कुकर्णेश्वरं नाम लिङ्गं तत्रैव तिष्ठति ।
तस्य दर्शनमात्रेण व्रतसिद्धिर्भवेन्नृणाम् ॥
शुष्केश्वराच्चोत्तरेण लिङ्गं पश्चान्मुखं स्थितम् ।
सिद्धेश्वरेति नामानं कुण्डस्यैव तटस्थितम् ॥
तत्र कुण्डे नरः स्नात्वा दृष्ट्वा सिद्धेश्वरं तु वै ।
सर्वासामेव सिद्धीनां पारं गच्छति मानवः ॥
वायव्ये तु दिशाभागे शङ्कुकर्णेश्वरस्य तु ।
माण्डव्येशमिति ख्यातं सुरसिद्धैस्तु वन्दितम् ॥
तस्य चैव समीपे तु स्वयं देवश्च तिष्ठति ।
गणैः परिवृतो देवि[1] देव्या सह महाप्रभुः ॥
द्वारे स्वे तिष्ठते देवि स्वयं क्षेत्रं च रक्षति ।
देवस्य चोत्तरे भागे नातिदूरे व्यवस्थितम् ॥
मुखलिङ्गं तु तत्रैव लिङ्गं पूर्वामुखं शुभे ।
तस्यैव चोत्तरे पार्श्वे[2] छागलेश्वरसंज्ञितम् ॥
पश्चान्मुखं तु तल्लिङ्गं सर्वसिद्धिप्रदायकम् ।
अन्यदायतनं देवि पश्चिमेन यशस्विनि ॥
कपर्दीश्वरनामानमुत्तमं सर्वदायकम ।

1. P. देवः
2. P. उत्तरपूर्वे तु

तस्य पूर्वेण सुश्रोणि लिङ्गं पूर्वामुखं स्थितम् ।
[1]हरितेश्वरनामानं सर्वपापक्षयङ्करम् ॥
कात्यायनेश्वरं नाम तस्य दक्षिणतः स्थितम् ।
तेन दृष्टेन मनुजः सर्वयज्ञफलं लभेत् ॥
अन्यत्तस्यैव पार्श्वे तु अङ्गारेश्वरसंज्ञितम् ।
तडागं चाऽपि तत्रस्थमङ्गारेश्वरसंज्ञितम् ॥
तस्य [2]दक्षिणदिग्भागे नातिदूरे व्यवस्थिम् ।
[3]मुकुरेश्वरनामानं सर्वयात्राफलप्रदम् ॥
पश्चिमाभिमुखं लिङ्गं कुण्डस्य पुरतः स्थितम् ।
तस्य कुण्डस्य पार्श्वे तु छागलेश्वरसंज्ञितम् ॥
तस्य दर्शनमात्रेण योगैश्वर्यं प्रवर्तते ।
अन्यानि सन्ति लिङ्गानि शतशोऽथ सहस्रशः ॥
न मया तानि चोक्तानि बहुत्वान्नामधेयतः ।
सप्तकोट्यस्तु लिङ्गानि अस्मिन् स्थाने स्थिता भुवि ॥
तेषां[4] दर्शनमात्रेण ज्ञानं चोत्पद्यते क्षणात् ।
उद्देशमात्रं कथितं मया तुभ्यं वरानने ॥
न शक्यं विस्तराद्वक्तुं वर्षकोटिशतैरपि ।
एतानि सिद्धलिङ्गानि कूपाः [5]पुण्या ह्रदास्तथा ॥
वाप्यो नद्योऽथ कुण्डानि मया ते परिकीर्तिताः ।
एतेषु चैव यः स्नानं करिष्यति समाहितः ॥
लिङ्गानि स्पर्शयित्वा च संसारे न विशेत् पुनः ।
पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि ॥

1. Two lines beginning with this are missing in B.
2. P. पश्चिम
3. B. कुक्कुटेश्वर in Udaipur Ms.
4. P and B येषां
5. P and B पुण्यह्रदास्तथा

तेषां मध्ये तु ये श्रेष्ठा मया ते कथिता शुभे ।
तीर्थयात्रा वरारोहे कथिता पापनाशिनी ॥
येन चैषा कृता देवि सोऽवश्यं मुक्तिभाग्भवेत् ।
॥ इति श्रीलिङ्गपुराणे [1]वाराणसीमाहात्म्ये गुह्यायतन-
वर्णनं नाम षोडशोऽध्यायः ॥

ईश्वर उवाच—

अन्यच्चैव प्रवक्ष्यामि महाभाग्यं वरानने ।
चतुर्दशायतनं कृत्वा अष्टायतनमेव च ॥
पञ्चायतनमेवं तु ललिता च विनायकः ।
नवदुर्गास्तथा प्रोक्ता एतत् कृत्यं वरानने ॥
रहस्यमेतत् कथितं न देयं यस्य कस्यचित् ।
[2]शैलेशं प्रथमं दृष्ट्वा स्नात्वा वै वरणां नदीम् ॥
स्नानं तु सङ्गमे कृत्वा दृष्ट्वा वै सङ्गमेश्वरम् ।
स्वर्लीने तु कृतस्नानो दृष्ट्वा स्वर्लीनमीश्वरम् ॥
मन्दाकिन्यां नरः स्नात्वा दृष्ट्वा वै मध्यमेश्वरम् ।
हिरण्यगर्भे स्नातस्तु दृष्ट्वा चैव तु ईश्वरम् ॥
मणिकर्ण्यां नरः स्नात्वा दृष्ट्वा चैशानमीश्वरम् ।
तस्मिन् कूप उपस्पृश्य दृष्ट्वा गोप्रेक्षमीश्वरम् ॥
कपिलायां ह्रदे स्नात्वा [3]दृष्ट्वा वै वृषभध्वजम् ।
उपशान्तस्य देवस्य दक्षिणे कूपमुत्तमम् ॥

1. P omits वाराणसीमाहात्म्ये
   B omits all words after लिङ्गपुराणे
2. B. शैलेयम्
3. From दृष्ट्वा to ज्येष्ठस्थानं missing in B.

तस्मिन् कूपे उपस्पृश्य दृष्ट्वोपशान्तमीश्वरम् ।
पञ्चचूडाह्रदे स्नात्वा ज्येष्ठस्थानं ततोऽर्चयेत् ॥
[1]चतुःसमुद्रकूपे तु स्नात्वा देवं ततोऽर्चयेत् ।
देवस्याऽग्रे तु कूपस्य तत्रोपस्पर्शने कृते ॥
ततोऽर्चयेत देवेशं शुद्धेश्वरमतः परम् ।
दण्डखाते नरः स्नात्वा व्यादेशं तु ततोऽर्चयेत् ॥
शौनकेश्वरकुण्डे तु स्नानं कृत्वा ततोऽर्चयेत् ।
जम्बुकेश्वरनामानं दृष्ट्वा चैव यशस्विनि ॥
दृष्ट्वा न जायते मर्त्यः संसारे दुःखसागरे ।
प्रतिपत्प्रभृति देवेशि यावत् कृष्णचतुर्दशीम् ॥
एतत्क्रमेण कर्तव्यं महदायतनं शुभे ।
अतः परं प्रवक्ष्यामि अष्टायतनमुत्तमम् ॥
तं दृष्ट्वा मनुजो देवि लाङ्गलीशं[3] ततो व्रजेत् ।
तं दृष्ट्वा तु ततो देवि आषाढीशं ततोऽर्चयेत् ॥
दृष्ट्वा चाऽऽषाढिनं देवि भारभूतं ततो व्रजेत् ।
तं दृष्ट्वा तु ततो देवं गच्छेद्वै त्रिपुरान्तकम् ॥
तं[4] दृष्ट्वाऽपि ततो देवि नकुलीशं ततो व्रजेत् ।
दक्षिणे [5]नकुलीशस्य त्र्यम्बकं च ततो व्रजेत् ॥

1. Missing in B and P.
2. B. शुभ्रेश्वरम्
3. P. लकुलीशं
4. B adds—
येन क्रमेण कर्तव्यं तच्छृणुष्व वरानने ।
अग्नीशाने च कर्तव्यं स्नानं वै दीर्घिकाजले ॥
दृष्ट्वा देवं ततो गच्छेदूर्वशीश्वरमुत्तमम् ।
5. P. लकुलीशस्य

अष्टायतनमेवं हि मया ते परिकीर्तितम् ।
अष्टायतनमेतद्धि करिष्यन्ति हि ये नराः ॥
ते मृताऽपि बहिः क्षेत्रे रुद्रलोकस्य भाजनाः ।

ईश्वर उवाच—

पूर्वं चैव मया देवि पञ्चायतनमुत्तमम्[1] ।
[2]रोचते मे सदा वासः पञ्चायतन उत्तमे ॥
एषां दिगुत्तरा देवि वाराणस्यां सदा प्रिये ।
मम चोत्तरतो नित्यमस्मिन् स्थाने विशेषतः ॥
एकान्तवासिनो विप्रा भस्मनिष्ठा दृढव्रताः ।
[3]तेषां तु चोत्तमं स्थानं तद्वदन्ति च केचन ॥
दिव्या हि सा परा मूर्तिरोङ्कारे ह स्थितः सदा ।
उत्पत्तिस्थितिकालेऽहं तस्मिन्नायतने स्थितः ॥
एवं च यो विजानाति न स पापेन लिप्यते ।
सत्यं सत्यं पुनः सत्यं त्रिः सत्यं नान्यतश्शुभे ॥
शीघ्रं तत्र च संयातु यदीच्छेन्मामकं पदम् ।
एवं ते कथितं देवि पुनर्विस्तरतो मया ॥

ईश्वर उवाच—

अविमुक्तं च स्वर्लीनं तथा मध्यमकं शुभम् ।
एतत् त्रिकण्टकं नाम मृत्युकालेऽमृतप्रदम् ॥
कारणं तस्य क्षेत्रस्य मया ते कथितं शुभे ।
इयं वाराणसी पुण्या श्रेष्ठा पाशुपती स्थली ॥

1. P. तर्पणे B. पूजनम्
2. P and B supply this line
3. P. तेषां तु परमं स्थानं यद्वदन्ति कदाचन ।

सर्वेषां चैव जन्तूनां हेतुर्मोक्षस्य सुन्दरि ।

तथा—

अविमुक्तं च स्वर्लीनमोङ्कारं चण्डमीश्वरम्[1] ।
मध्यमं कृत्तिवासं च षडङ्गमीश्वरं स्मृतम् ॥
अविमुक्ते महाक्षेत्रे गुह्यमेतत्परं मम ।
सोपदेशेन ज्ञातव्यं यदीच्छेत् परमं पदम् ॥
एतद्रहस्यमाहात्म्यं[2] न देयं यस्य कस्यचित् ।
अतः परं प्रवक्ष्यामि यात्राकालं च सर्वदा ॥
चैत्रमासे तु देवैस्तु यात्रेयं च कृता शुभा ।
तस्यैव कामकुण्डे तु स्नानपूजनतत्परैः ॥
वैशाखे दैत्यराजैस्तु यात्रेयं च कृता पुरा ।
विमलेश्वरकुण्डे तु स्नानपूजनतत्परैः ॥
ज्येष्ठमासेऽपि सिद्धैस्तु यात्रेयं च कृता पुरा ।
रुद्रवासस्य कुण्डे तु स्नानपूजनतत्परैः ॥
आषाढे चाऽपि गन्धर्वैर्यात्रेयं च कृता मम ।
श्रिया देव्यास्तु कुण्डस्थैः स्नानपूजनतत्परैः ॥
विद्याधरैस्तु यात्रेयं श्रावणे मासि तत्परैः ।
लक्ष्मीकुण्डस्य संस्थैश्च स्नानपूजनतत्परैः ॥
पितृभिश्चाऽपि यात्रेयमाश्विने मासि तत्परैः ।
[4]कपिलाह्रदसंस्थैश्च स्नानपूजनतत्परैः ॥

1. P. दण्डमीश्वरम्
2. B. एतद्रहस्यमाख्यातम्
3. P and B शुभे
4. B and P omit this line and the next

ऋषिभिश्चाऽपि यात्रेयं कार्त्तिके मासि तत्परैः ।
मार्कण्डेयह्रदस्थैश्च स्नानपूजनतत्परैः ॥
विद्याधरैश्च यात्रेयं मासि मार्गशिरे कृता ।
कपालमोचनस्थैश्च स्नानपूजनतत्परैः ॥
गुह्यकैश्चैव यात्रेयं पुष्यमासे तु तत्परैः ।
[1]पिशाचैश्चैव यात्रेयं माघमासे च तत्परैः ॥
धनदेश्वरकुण्डस्थैः स्नानपूजनतत्परैः ।
यक्षेशैश्चाऽपि यात्रेयं माघमासे च तत्परैः ॥
कोटितीर्थे तु संस्थैश्च स्नानपूजनतत्परैः ।
पिशाचैश्चैव यात्रेयं फाल्गुने मासि तत्परैः ॥
गोकर्णकुण्डसंस्थैश्च स्नानपूजनतत्परैः ।
पिशाचैस्तु यदा यस्मिन् फाल्गुनस्य चतुर्दशीम् ॥
तेन सा प्रोच्यते देवि पिशाची नाम विश्रुता ।
अतः परं प्रवक्ष्यामि यात्रायां निष्कृतिः परा ॥
उदकुम्भास्तु दातव्या मिष्टान्नेन समन्विताः ।
तेन देवि तदा प्राप्तं पूर्वोक्तं फलमेव च ॥
अतः परं प्रवक्ष्यामि यात्रायां च वरानने ।
शुक्लपक्षे तृतीयायां तव यात्रा महाफला ॥
[2]यत्र गौरी तु द्रष्टव्या तां च शृणु वरानने ।
स्नानं कृत्वा तु गन्तव्यं गोप्रेक्षे तु यशस्विनि ॥
अहनि कालिका देवी अर्चितव्या प्रयत्नतः ।
ज्येष्ठस्थाने ततो गौरी अर्चितव्या प्रयत्नतः ॥
तस्मात् स्थानात्तु गन्तव्यमविमुक्तस्य चोत्तरे ।

1. B and P omit this line
2. P. तत्र

तत्र देवी सदा गौरी पूजितव्या च भक्तितः ॥
अन्या वाऽपि परा प्रोक्ता संवर्तललिता शुभा[1] ।
द्रष्टव्या चाऽपि सा देवी सर्वकामफलप्रदा ॥
[2]सर्वकामानवाप्नोति यदि ध्यायेत मानवः ।
ततस्तु भोजयेद्विप्रान् शिवभक्तान् शुचिव्रतान् ॥
वासैः सदक्षिणैश्चैव यथार्हमतिपुष्कलैः ।
पञ्चगौरीं तु यः कृत्वा भक्त्या देवि समाहितः ॥
सर्वांश्चैव रसान् गन्धान् गौरीमुद्दिश्य ब्राह्मणे ।

दद्यादिति शेषः ।

उत्तमं श्रेय आप्नोति सौभाग्येन समन्वितम् ।
विनायकान् प्रवक्ष्यामि अस्य क्षेत्रस्य विघ्नदान् ॥
[3]ढुण्ढिं तु प्रथमं दृष्ट्वा तथा कोणविनायकम्[4] ।
देव्या विनायकं चैव गोप्रेक्षे हस्तिनं स्मृतम् ॥
विनायकं तथैवाऽन्यं सिन्दूरं नाम विश्रुतम् ।
चतुर्थो देवि द्रष्टव्य एवं पञ्च विनायकाः ॥
लड्डुकाश्च प्रदातव्या एतानुद्दिश्य ब्राह्मणे ।
एतेन चैव धर्मेण सिद्धिमान् जायते नरः ॥
अतः परं प्रवक्ष्यामि चण्डिकाः क्षेत्ररक्षिकाः ।
दक्षिणे रक्षते दुर्गा नैर्ऋते चोत्तरेश्वरी ॥
अङ्गारेशी पश्चिमे च वायव्ये भद्रकालिका ।
उत्तरे भीष्मचण्डी च महामुण्डा च सा ततः ॥

1. P and B संवर्तललिता परा
2. P and B सर्वान् कामान
3. P and B ढोडं
4. B. कीलविनायकम्

ऊर्ध्वकेशी समायुक्ता शाङ्करी सर्वतः स्मृता ।
ऊर्ध्वकेशी च आग्नेय्यां चित्रघण्टाऽथ मध्यतः ॥
एताश्च चण्डिका देवि योऽत्र द्रक्ष्यति च मानवः ।
तस्य तुष्टाश्च ताः सर्वाः क्षेत्रं रक्षन्ति तत्पराः ॥
विघ्नं कुर्वन्ति सततं पापानां देवि सर्वदा ।
तस्माच्चैव सदा पूज्याश्चण्डिकाः सविनायकाः ॥
यदीच्छेत् सततं देवि वाराणस्यां शुभां स्थितिम्[1] ।
अन्यच्च ते प्रवक्ष्यामि तस्मिन् क्षेत्रे सुरेश्वरि ॥
तिस्रो नद्यस्तु तत्रस्था वहन्ति च शुभोदकाः ।
यासां दर्शनमात्रेण ब्रह्महत्त्या निवर्तते ॥
एका पितामहस्रोता मन्दाकिनी तथाऽपरा ।
मत्स्योदरी तृतीया च एतास्तिस्रस्तु पुण्यदाः ॥
मन्दाकिनी तथा पुण्या मध्यमेश्वरसंस्थिता ।
पितामहस्रोतिका च अविमुक्ते तु पुण्यदा ॥
मत्स्योदरी च ओङ्कारे पुण्यदा सर्वदैवतैः ।
तस्मिन् स्थाने यदि गङ्गा आगमिष्यति भामिनि ॥
तदा पुण्यतमः कालो देवानामपि दुर्लभः ।
वरणासिक्तसलिले जाह्नवी जलमिश्रिते ॥
[2]तत्र नादेश्वरे पुण्ये स्नातः किमनुशोचति ।
तस्मिन् काले च तत्रैव स्नानं देवि कृतं मया ॥
तेन हस्ततलाद्देवि कपालं पतितं क्षणात् ।
कपालमोचनं नाम तत्रैव सुमहत्सरः ॥

1. P and B शुभार्थिभिः
2. B substitutes तत्र गङ्गा नदी नाम्ना तत्रैव तु महत्सरः ।

पावनं सर्वसत्त्वानां पुण्यदं सर्वदेहिनाम् ।
ओङ्कारेश्वरनामानं तत्र स्नानं कृतं मया ॥
तेन स प्रोच्यते देव ओङ्कारेश्वरनामतः ।
मत्स्योदरीजले गङ्गा ओङ्कारेश्वरसन्निधौ ॥
तदा तस्मिन् जले स्नात्वा ब्रह्महत्त्यां व्यपोहति ।
मत्स्योदरी जले स्नात्वा दृष्ट्वा चोङ्कारमीश्वरम् ॥
शोकमोहजरामृत्युर्न च तं स्पृशते पुनः ।

॥ इति श्रीलिङ्गपुराणे [1]वाराणसीमाहात्म्ये गुह्यायतन-वर्णनं नाम सप्तदशोऽध्यायः ॥

विष्णुरुवाच—

एतच्छ्रुत्वा वचो देवी विस्मयोत्फुल्ललोचना ।
ओङ्कारदर्शनार्थं वै कपिलेशमुपागता ॥
तस्मात्त्वमपि देवेशं पूजयस्व सदाशिवम् ।
एतत्परममानन्दं प्राप्स्यते परमं पदम् ॥
एतच्छ्रुत्वा परं गुह्यं सकाशाच्चक्रपाणिनः ।
ओङ्कारमर्चयेद्देवं सदा तद्गतमानसः ॥

सूर्य उवाच—

तस्मात्त्वमपि दुर्धर्षमाराधय सुरेश्वरम् ।
तेन तत्पदमाप्नोषि यदन्यैरपि दुर्लभम् ॥
सूर्यस्य वचनं श्रुत्वा वाराणस्यामुपागतः ।
तत्र देवि तदोङ्कारं दृष्ट्वा चैव प्रणम्य च ॥
आराधनपरो भूत्वा लिङ्गं स्थाप्य चतुर्मुखम् ।
देवदेवसकाशाद्वै कृतकृत्यो भवेच्छुचिः ॥

1. P omits all words which follow except अध्यायः

यः संप्राप्य महत्तत्त्वमीश्वरे कृतनिश्चयः ।
तस्मात्त्वमपि गाङ्गेय[1] यदि श्रेयोऽभिवाञ्छसि ॥
आराधयस्व देवेशं मनसः स्थैर्यमात्मनः ।

तथा—

तस्मिंस्तु यः शिवः साक्षादोङ्कारेश्वरसंज्ञितः ॥
एतद्गुह्यस्य माहात्म्यं तव स्नेहान्महामुने ।
अकारं च उकारं च मकारं च प्रकीर्तितः ॥
अस्मिँल्लिङ्गे तु संसिद्धो मुनिकालिकवृक्षयः (?) ।
अकारस्तत्र विज्ञेयो विष्णुलोकगतिप्रदः ॥
तस्य दक्षिणपार्श्वे तु ओङ्काराख्येति कीर्तितः ।
तत्र सिद्धिं परां प्राप्तो देवाचार्यो बृहस्पतिः ॥
उकारं तत्र विज्ञेयं ब्रह्मणः पदमव्ययम् ।
तस्य चोत्तरदिग्भागे मकारं विष्णुसंज्ञकम् ॥
तस्मिँल्लिङ्गे च संसिद्धः कपिलर्षिर्महामुनिः ।
तस्मात्त्वमपि गार्गेय मनस्स्थैर्यं यदीच्छसि ॥
लिङ्गस्याऽऽराधने यत्नं कुरुष्व नियतव्रतः ।
विद्यां पाशुपतीं प्राप्य तस्मिन् स्तुत्ये व्यपाश्रयः ॥
निर्ममो निरहङ्कारः पदमाप्नोषि शाश्वतम् ।
एतच्छ्रुत्वा वचः स्तुत्वा[2] याज्ञवल्क्यस्य दर्शिताः ॥
वाराणसीं समभ्येत्य पञ्चायतनमुत्तमम् ।
आराध्यमानो देवेशस्तस्मिन् स्थाने स्थितः सदा ॥
तस्मादन्येऽपि ये केचिल्लिङ्गस्याऽऽराधने रताः ।
तेषां वै पश्चिमे काले ज्ञानमुत्पद्यते सदा ॥

1. P. गार्गेय
2. P. सत्या

एवं ज्ञात्वा तु यो मर्त्यः सदा लिङ्गार्चने रतः ।
न तस्य पुनरावृत्तिः कल्पकोटिशतैरपि ॥
तस्माद्वै संप्रदायाच्च[1] अर्चितव्यं प्रयत्नतः ।
मानुष्यं दुर्लभं प्राप्य विद्युत्संपातचञ्चलम् ॥
लिङ्गं योऽर्चयते विप्र आत्मानं स समुद्धरेत् ।
आत्मानं घातयेन्नित्यं यो न लिङ्गं समर्चयेत् ॥

॥ इति श्रीलिङ्गपुराणे वाराणसीमाहात्म्ये गुह्यायतनवर्णनं नामाऽष्टादशोऽध्यायः ॥

स्कन्दपुराणे—

स तमुद्यानमासाद्य देवीमाह जगत्पतिः ।
अस्मिन् देशे पुरा देवि तिष्ठतो मम शोभने ॥
ऊर्ध्वं गोलोकसंस्थानं गवां वत्सैः स्वयंभवैः ।
वेगतः पीयमानानां फेनो मूर्ध्नि ममाऽपतत् ॥
ततो न पश्यति ताश्च गा वत्साः सोमपार्श्वगाः ।
ततस्ताः प्रेक्षितास्तत्र मया गावस्तदाऽभवन् ॥
तेजसा दह्यमानास्तु नैव कर्माऽस्तु (?) साधिताः ।
गावः पूर्वमिमा देवि आसन् कपिलवर्णकाः ॥
नैकवर्णास्तदा भूता मया संप्रेक्षिताः सदा ।
शरणं तस्य ता जग्मुर्ब्रह्माणं विबुधोत्तमम् ॥
अग्रतः समुपागत्य कृताञ्जलिपुटस्ततः ।
अर्दिताभिस्तदा गोभिर्ब्रह्मा मामब्रवीत्ततः ॥
प्रसादं कुरु देवेश सुरभीणां सुतेजसाम् ।
विनश्येयुर्यथा नेमास्तथा कुरु सुरार्चितः ॥

1. P. संप्रसादाच्च

ततोऽहमास्थितो देवि स्थानेऽस्मिन् स्वयमेव तु ।
गोप्रेक्षक इति ख्यातः संस्तुतः सर्वदेवतैः ॥
गौप्रेक्षेश्वरमागत्य दृष्ट्वाऽभ्यर्च्य च मानवः ।
न दुर्गतिमवाप्नोति कल्मषैश्च विमुच्यते ॥
ततस्ता दह्यमानास्तु प्रसवैः सुरभी मया[1] ।
ह्रदेऽस्मिन् पेतुरभ्येत्य श्रान्तास्तोयं पपुस्तथा ॥
कपिलाह्रद इत्येवं ततः प्रभृति कथ्यते ।
अत्राऽपि स्वयमेवाऽहं वृषध्वज इति स्थितः[2] ॥
सान्निध्यं कृतवान् देवि सदाऽयं दृश्यतां स्थितः ।
कपिलाह्रदतीर्थेऽस्मिन् स्नात्वा संयतमानसः ॥
वृषध्वजमिदं दृष्ट्वा सर्वयज्ञफलं लभेत् ।
स्वर्लोकतां मृतश्चाऽपि अर्चयित्वा तु मामिह ॥
लभते देहभेदेन [3]गणत्वं चाऽतिदुर्लभम् ।
अस्मिन्नपि प्रदेशे तु ता गावो ब्रह्मणा स्वयम् ॥
शान्त्यर्थं सर्वलोकानां सर्वा दुग्धाः पयोऽमृतम् ।
तासां क्षीरेण सञ्जातं ह्रदमेतन्मनोहरम् ॥
भद्रदोहमिति ख्यातं पुण्यं देवह्रदं शुभम् ।
सर्वैर्देवैरहं देवि अस्मिन् देशे प्रसादितः ॥
गच्छोपशममीशेति उपशान्तः शिवस्ततः ।
शिवो भूत्वाऽहमत्रस्थः पुण्यमस्याऽपि दर्शनम् ॥
दृष्ट्वैनं नियतो मर्त्यः स्वर्गलोकमवाप्नुयात् ।
अत्राऽहं ब्रह्मणाऽऽनीय स्थापितः परमेष्ठिना ॥

1. P. सुरभीरपि
2. P and B स्मृतः
3. P. गतिं वा चाऽत्र दुर्लभाम्

ब्रह्मणश्चाऽपि संगृह्य विष्णुना स्थापितः पुनः ।
ब्रह्मणा स ततो विष्णुः प्रोक्तः संभिन्नचेतसा ॥
मयाऽऽनीतमिदं लिङ्गं कस्मात् स्थापितवानसि ।
तमुवाच पुनर्विष्णुर्ब्रह्माणं कुपिताननम् ॥
रुद्रे देवे ममाऽत्यन्तं परा भक्तिर्महत्तरा ।
मयैव स्थापितोऽपीह नाम्ना तव भविष्यति ॥
हिरण्यगर्भ इत्येवं तत्राऽहं समवस्थितम् ।
दृष्ट्वैनमपि देवेशि मम लोके महीयते ॥
पुनश्चाऽपि ततो ब्रह्मा मम लिङ्गमिदं शुभे ।
स्थापयामास विधिवद्भक्त्या परमया युतः ॥
स्वर्लीनेश्वर इत्येवं तत्राऽहं समवस्थितः ।
तस्मिन् परतरे लीने प्रधाने मम कारणे ॥
तस्मात् स्वर्लीन इत्येवं गुह्यक्षेत्रमिति स्थितम् ।
प्राणानिह नरस्त्यक्त्वा न पुनर्जायते क्वचित् ॥
अनन्ता सा गतिस्तस्य योगिनामेव या स्मृता ।
अस्मिन्नपि महादेशे दैत्यो देवस्य कण्टकः ॥
व्याघ्ररूपं समास्थाय निहतो दर्पितो बली ।
व्याघ्रेश्वरेति संख्यातो नित्यमत्राऽहमास्थितः ॥
न पुनर्दुर्गतिं याति दृष्टेन स महेश्वरम् ।
उत्पलो विदलश्चैव यौ दैत्यौ ब्रह्मणः पुरा ॥
स्त्रीवध्यौ दर्पितौ दृष्ट्वा त्वयैव निहतौ शुभे ।
सावज्ञं कन्दुकेनाऽत्र तस्येदं चिह्नमास्थितम् ॥
आदावत्राऽहमागत्य आस्थितो गणपैः सह ।
ज्येष्ठस्थानमिदं तस्मादेतन्मे पुण्यदर्शनम् ॥

दृष्ट्वैवं मम लिङ्गं तु ज्येष्ठस्थानसमाश्रितम् ।
न शोचते पुनर्मर्त्यः सिद्धो जन्मनि जन्मनि ॥
समन्ताच्चाऽपि देवैर्मे लिङ्गानि स्थापितानि ह ।
दृष्ट्वा तु नियतो मर्त्यो देहभेदे गणो भवेत् ॥
इदानीमहमागत्य स्वयमस्मिन् व्यवस्थितः ।
न विमुक्तं मया यस्मादविमुक्तमिदं ततः ॥
क्षेत्रं वाराणसीपुण्यं मुक्तिदं संभविष्यति ।
अविमुक्तेश्वरं मां वै योऽत्र द्रक्ष्यति मानवः ॥
गाणपत्यं गतिस्तस्य यत्र तत्र मृतस्य हि ।
प्राणानिह च संत्यज्य प्राप्यते मुक्तिरुत्तमा ॥
पित्रा ते गिरिराजेन शैले हिमवता स्वयम् ।
मम प्रियं तु तत्स्थानं ज्ञात्वा लिङ्गं प्रतिष्ठितम् ॥
शैलेश्वरमिति ख्यातं दृश्यतामिह संस्थितम् ।
दृष्ट्वैनं मनुजो देवि न दुर्गतिमवाप्नुयात् ॥
नदी वाराणसी चेयं पुण्या पापप्रणाशिनी ।
क्षेत्रमेतदलंकृत्य जाह्नव्या सह संगता ॥
स्थापितं संगमे चाऽस्मिन् ब्रह्मणा लिङ्गमुत्तमम् ।
सङ्गमेश्वरमित्येवं ख्यातं जगति दृश्यते[1] ॥
सङ्गमे देवनद्योश्च यः स्नात्वा मनुजः शुचिः ।
अर्चयेत् सङ्गमेशानं तस्य जन्मभयं कुतः ॥
स्थापितं लिङ्गमेतच्च शुक्रेण तव सूनुना ।
नाम्ना शुक्रेश्वरं लिङ्गं सर्वसिद्धामरार्चितम् ॥

1. B. दृश्यताम्

दृष्ट्वैव मानवः सद्यो मुक्तः स्यात् सर्वकिल्बिषैः ।
न मृतश्च पुनर्जन्म संसारे तु लभेन्नरः ॥
पुरा जम्बूकरूपेण असुरो देवकण्टकः ।
ब्रह्मणः स वरं लब्ध्वा गोमायुर्वधशङ्कितः ॥
हतो हिमवतः पुत्रि जम्बुकेशस्ततो ह्यहम् ।
अनवद्यगतिः ख्यातः सुरासुरनमस्कृतः ॥
दृष्ट्वैनमपि देवेशं सर्वान् कामानवाप्नुयात् ।
देवैः शक्रपुरोगैश्च एतानि स्थापितानि ह ॥
[1]पञ्च लिङ्गानि पुण्यानि सर्वकामप्रदानि तु ।
एवमेतानि पुण्यानि सन्निवासानि पार्वति ॥
कथितानि तव क्षेत्रे गुह्यं वाक्यमिदं शृणु ।
महालयगिरिस्थं मां केदारे च व्यवस्थितम् ॥
गणत्वं लभते दृष्ट्वा क्षेत्रेऽस्मिन् मुक्तिरुच्यते ।
गाणपत्यपदं तस्माद्यतः सा मुक्तिरुत्तमा ॥
ततो महालयात्तस्मात् केदारान्मध्यमादपि ।
स्मृतं पुण्यतमं क्षेत्रमविमुक्तमिदं शुभे ॥
केदारं मध्यमं स्थानं स्थानं चैव महालयम् ।
मम पुण्यानि भूलोके तेभ्यः श्रेष्ठतमं त्विदम् ॥
मम सृष्टास्त्विमे लोकास्त्वतः क्षेत्रमिदं शुभे ।
[2]लोके वित्तसमायुक्तमविमुक्तमतोऽभवत् ॥
अविमुक्तेश्वरं लिङ्गं मम दृष्ट्वेह मानवः ।
सद्यः पापविनिर्मुक्तः पशुपाशैर्विमुच्यते ॥

1. B omits four lines from here
2. B. लोकदिन्तसमायुक्तं

शैलेशं सङ्गमेशं च स्वर्लीनं मध्यमेश्वरम् ।
[1]हिरण्यगर्भमीशानं गोप्रेक्षं वृषभध्वजम् ॥
उपशान्तशिवं चैव ज्येष्ठस्थाननिवासिनम् ।
शुक्रेश्वरं च विख्यातं व्याघ्रेशं जम्बुकेश्वरम् ॥
दृष्ट्वा न जायते मर्त्यः संसारे दुःखसागरे ॥

॥ इति भट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे वाराणसीमाहात्म्यं
समाप्तम् ॥

1 B omits three lines from here

## ॥ ३ ॥

## ॥ अथ प्रयागमाहात्म्यम् ॥

तत्र मत्स्यपुराणे[1]—

[2]भगवन् श्रोतुमिच्छामि पुरा कल्पे यथा श्रुतम् ।
[ब्रह्मणा देवमुख्येन यथावत्कथितं मुने][3] ॥
कथं प्रयागगमनं नराणां तत्र कीदृशम् ।
मृतानां का गतिस्तत्र स्नातानां चैव किं फलम् ॥
ये वसन्ति प्रयागे तु ब्रूहि तेषां च किं फलम् ।
एतत् सर्वं ममाऽऽख्याहि परं कौतूहलं हि मे ॥

मार्कण्डेय उवाच—

कथयिष्यामि ते वत्स यच्चेष्टं यच्च तत्फलम् ।
पुरा ऋषीणां विप्राणां कथ्यमानं मया श्रुतम् ॥
[4]यत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।
आप्रयागप्रतिष्ठानादापुराद्वासुकेर्ह्रदात् ।
कम्बलाश्वतरौ नागौ नागाच्च बहुमूलकात् ॥
एतत्प्रजापतेः क्षेत्रं त्रिषु लोकेषु विश्रुतम् ।
यत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥

1. म. पु. १०४-युधिष्ठिर उवाच
2. म. पु. अ. १०४, श्लो. ३-११
3. [ ] मुद्रितपुराणे अधिकः पाठः
4. मुद्रितमत्स्यपुराणे, नागपुरकोशे च एषा पङ्क्तिः न दृश्यते

तत्र ब्रह्मादयो देवा रक्षां कुर्वन्ति सर्वदा ।
अन्ये च बह्वस्तीर्थाः सर्वपापहराः शुभाः ॥
न शक्याः कथितुं राजन् बहुवर्षशतैरपि ।
संक्षेपेण प्रवक्ष्यामि प्रयागस्य तु कीर्तनम् ॥
षष्टिर्धनुःसहस्राणि यानि रक्षति जाह्नवी ।
यमुनां रक्षति सदा सविता सप्तवाहनः ॥
प्रयागं तु विशेषेण स्वयं रक्षति वासवः ।
मण्डलं रक्षति हरिर्दैवतैः सह सङ्गतः ॥
तं वटं रक्षति शिवः शूलपाणिर्महेश्वरः ।
स्थानं रक्षन्ति वै देवाः सर्वपापहराः शुभाः ॥
अधर्मेणाऽऽवृतो लोको नैव गच्छति तत्पदम् ।
अल्पमल्पतरं पापं यदा तस्य नराधिप ॥
प्रयागं स्मरमाणस्य सर्वमायाति संक्षयम् ।
दर्शनात्तस्य तीर्थस्य नामसंकीर्तनादपि ॥
मृत्तिकालम्भनाद्वाऽपि नरः पापात् प्रमुच्यते ।
पञ्च कुण्डानि राजेन्द्र येषां मध्ये तु जाह्नवी ॥
प्रयागस्य प्रवेशात्तु पापं नश्यति तत्क्षणात् ।

तथा—

[1]सत्यवादी जितक्रोधो अहिंसां परमास्थितः ॥
धर्मानुसारी तत्त्वज्ञो गोब्राह्मणहिते रतः ।
गङ्गायमुनयोर्मध्ये स्नातो मुच्येत किल्बिषात् ॥

1. १०४, १६-२०

मनसा चिन्तितान् कामांस्तांश्च प्राप्नोति पुष्कलान् ।
ततो गत्वा प्रयागं तु सर्वदेवाभिरक्षितम् ॥
ब्रह्मचारी वसन् मासं पितॄन् देवांश्च तर्पयेत् ।
ईप्सिताँल्लभते कामान् यत्र यत्राऽभिजायते ॥
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ।
समागता महाभागा यमुना यत्र[1] निम्नगा ॥
यत्र सन्निहितो देवः साक्षाद्देवो महेश्वरः ।
दुष्प्रापं मानुषैः पुण्यं प्रयागं तु युधिष्ठिर ॥
देवदानवगन्धर्वा ऋषयः सिद्धचारणाः ।
तत्रोपस्पृश्य राजेन्द्र स्वर्गलोकमुपासते ॥

तथा[2]—

मार्कण्डेय उवाच—

[3]शृणु राजन् प्रयागस्य माहात्म्यं पुनरेव तु ।
यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नाऽत्र संशयः ॥
आर्तानां च दरिद्राणां निश्चितव्यवसायिनाम् ।
स्थानमुक्तं प्रयागं तु नाऽऽख्येयं तु कदाचन ॥
व्याधितो यदि वा दीनः क्रुद्धो वाऽपि भवेन्नरः ।
[4]गङ्गायमुनामासाद्य यस्तु प्राणान् परित्यजेत् ॥
दीप्तकाञ्चनवर्णाभैर्विमानैः सूर्यवर्चसैः ।
गन्धर्वाप्सरसां मध्ये स्वर्गे मोदति मानवः ॥

1. P B and printed text read तत्र
2. म. पु. अ. १०५
3. १०५, १-१४
4. P, गङ्गाया यमुनासाद्य
म. पु. अ. १०५. श्लो. ३ गङ्गायमुनयोर्मध्ये

ईप्सितांल्लभते कामान् वदन्ति ऋषिपुङ्गवाः ।
सर्वरत्नमयैर्दिव्यैर्नानाध्वजसमाकुलैः ॥
वराङ्गनासमाकीर्णविमानैः शुभलक्षणैः ।
गीतवादित्रनिर्घोषैः प्रसुप्तः प्रतिबुध्यते ॥
यावन्न स्मरते जन्म तावत् स्वर्गे महीयते ।
ततः स्वर्गात् परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ।
हिरण्यरत्नसंपूर्णे समृद्धे जायते कुले ॥
तदेव च स्मरेत्तीर्थं स्मरणात्तत्र गच्छति ।
देशस्थो यदि वाऽरण्ये विदेशे यदि वा गृहे ॥
प्रयागं स्मरमाणोऽपि यस्तु प्राणान् परित्यजेत् ।
ब्रह्मलोकमवाप्नोति वदन्ति ऋषिपुङ्गवाः ॥
सर्वकामफला वृक्षा मही यत्र हिरण्मयी ।
ऋषयो मुनयः सर्वे तत्र लोके स गच्छति ॥
स्त्रीसहस्राकुले रम्ये मन्दाकिन्यास्तटे शुभे ।
मोदते ऋषिभिः सार्धं सुकृतेनेह कर्मणा ॥
सिद्धचारणगन्धर्वैः पूज्यते दिवि दैवतैः ।
ततः स्वर्गात् परिभ्रष्टो जम्बुद्वीपपतिर्भवेत् ॥[1]
ततः शुभानि कर्माणि चिन्तयानः पुनः पुनः ।
गुणवान् वित्तसंपन्नो भवतीह न संशयः ॥
कर्मणा मनसा वाचा सत्यधर्मप्रतिष्ठितः ।
गङ्गायमुनयोर्मध्ये यस्तु गां संप्रयच्छति ॥
स गोरोमसमाब्दानि लभते स्वर्गमुत्तमम् ।
यस्तु गां प्रतिगृह्णाति गङ्गायमुनसङ्गमे ॥

1. Compare the legend of मुकुन्दब्रह्मचारी, who after suicide in Prayāg, is supposed to have been reborn as the emperor Akbar.

सुवर्णमणिमुक्तां वा यदि वाऽन्यं प्रतिग्रहम् ।
स्वकार्ये पितृकार्ये वा देवताभ्यर्चनेऽपि वा ॥
[1]विफलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते[2] ।

तीर्थे कृतप्रतिग्रहस्य पुरुषस्य यावत्तीर्थप्रतिग्रहोपार्जितधने स्वत्वमनुवर्तते, तावत्तीर्थदानादिषु कोटिगुणत्वादिलक्षणं फलं न जनयति। तद्धनत्यागात्तु स्वफलं जनयत्येव।

[3]एवं तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च ।
निमित्तेषु च सर्वेषु अप्रमत्तो भवेद्द्विजः ॥
कपिलां पाटलां वर्णां यस्तत्रैव प्रयच्छति ।
स्वर्णश्रृङ्गीं रौप्यखुरां चैलकं गां पयस्विनीम् ॥
प्रयागे श्रोत्रियं साधुं ग्राहयित्वा यथाविधि ।

'ग्राहयित्वा' स्वीकार्य ।

शुक्लाम्बरधरं शान्तं धर्मज्ञं वेदपरागम् ॥
सा गौस्तस्यैव दातव्या गङ्गायमुनसङ्गमे ।
वासांसि च महार्हाणि रत्नानि विविधानि च ॥
यावद्रोमाणि तस्या गोः सन्ति गात्रेषु सत्तम ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
यत्राऽसौ लभते जन्म सा गौस्तत्राऽभिजायते ।
न च पश्यति तं घोरं नरकं तेन कर्मणा ॥
उत्तरान् स कुरून् प्राप्य मोदते कालमक्षयम् ।
गवां शतसहस्रेभ्यो दद्यादेकां पयस्विनीम् ॥

1. म. पु. अ. १०५, B. सफलं
2. B. यावन्न फलमश्नुते
3. १०५, १५-२२

पुत्रान् दारांस्तथा भृत्यान् गौरेका प्रतिकारयेत् ।
तस्मात् सर्वेषु दानेषु गोदानं तु विशिष्यते ।
दुर्गमे विषमे घोरे महापातकसंभ्रमे ॥
गौरेव रक्षां कुरुते तस्माद्देया द्विजोत्तमे ।

## प्रयागतीर्थयात्राविधिः

[1]मार्कण्डेय उवाच—

[2]कथयिष्यामि ते वत्स[3] तीर्थयात्राविधिक्रमम् ।
आर्षेणैव विधानेन यथादृष्टं यथाश्रुतम् ॥
प्रयागतीर्थयात्रार्थी यः प्रयाति नरः क्वचित् ।
बलीवर्दसमारूढः शृणु तस्याऽपि यत्फलम् ॥
नरके वसते घोरे गवां क्रोधो हि दारुणः ।
सलिलं न च गृह्णन्ति पितरश्चाऽस्य देहिनः ॥
यस्तु पुत्रांस्तथा बालान् पाययेत् स्नापयेत्तथा ।
यथात्मानं तथा सर्वं दानं विप्रेषु दापयेत् ॥
ऐश्वर्यलोभमोहाद्वा गच्छेद्यानेन यो नरः ।
निष्फलं तस्य तत्तीर्थं तस्माद्यानं विवर्जयेत् ॥
गङ्गायमुनयोर्मध्ये यस्तु कन्यां प्रयच्छति ।
आर्षेणैव विधानेन यथा विभवसंभवम्[4] ॥
न स पश्यति तं घोरं नरकं तेन कर्मणा ।
उत्तरान् स कुरून् गत्वा मोदते कालमक्षयम् ॥

1. म. पु अ. १०६
2. १०६, ३-१४
3. म. पु. राजन्
4. B. सम्भवाम्

पुत्रदारांश्च लभते धार्मिकान् रूपसंयुतान् ।
तत्र दानं प्रदातव्यं यथाविभवसंभवम् ॥
तेन तीर्थफलं चैव वर्धते नाऽत्र संशयः ।
स्वर्गे तिष्ठति राजेन्द्र यावदाभूतसंप्लवम् ॥
वटमूलं समासाद्य यस्तु प्राणान् परित्यजेत् ।
सर्वलोकानतिक्रम्य रुद्रलोकं स गच्छति ॥
तत्र ते द्वादशाऽऽदित्यास्तपन्ते रुद्रमाश्रिताः ।
निर्दहन्ति जगत् सर्वं वटमूलं न दह्यते ॥
नष्टचन्द्रार्कपवनं यदा चैकार्णवं जगत् ।
स्वपते तत्र वै विष्णुर्यतमानः पुनः पुनः ॥
देवदानवगन्धर्वा ऋषयः सिद्धचारणाः ।
सदा सेवन्ति तं तीर्थं गङ्गायमुनसंगमम् ॥

तथा—

[1]तत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ।
[2]हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ॥
गङ्गायमुनयोर्मध्ये पृथिव्या जघनं स्मृतम् ।
प्रयागं राजशार्दूल त्रिषु लोकेषु विश्रुतम् ॥
ततः पुण्यतमं नास्ति त्रिषु लोकेषु भारत ।
श्रवणात्तस्य तीर्थस्य नामसङ्कीर्तनादपि ॥
मृत्तिकालम्भनाद्वाऽपि नरः पापात् प्रमुच्यते ।
तत्राऽभिषेकं यः कुर्यात् संगमे संशितव्रतः ॥

1. म. पु. अ. १०६, १५-४८ B omits this line
2. *Ibid* श्लो. १७

तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ।
न वेदवचनात्तात न लोकवचनादपि ॥
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ।
दशतीर्थसहस्राणि षष्टिः कोट्यस्तथाऽपराः ॥
येषां सान्निध्यमत्रैव कीर्तनात् कुरुनन्दन ।
या गतिर्योगयुक्तस्य सत्त्वस्थस्य च धीमतः ॥
सा गतिस्त्यजतः प्राणान् गङ्गायमुनसङ्गमे ।
न ते जीवन्ति लोकेऽस्मिन् यत्र तत्र युधिष्ठिर ॥
ये प्रयागं न संप्राप्तास्त्रिषु लोकेषु वञ्चिताः ।
एवं दृष्ट्वा तु तत्तीर्थं प्रयागं परमं पदम् ॥
मुच्यते सर्वपापेभ्यः शशाङ्क इव राहुणा ।
कम्बलाश्वतरौ नागौ [1]यमुनादक्षिणे तटे ।
तत्र स्नात्वा च पीत्वा च सर्वपापैः प्रमुच्यते ॥
तत्र गत्वा तु संस्थानं महादेवस्य धीमतः ।
नरस्तारयते पूर्वं दशाऽतीतान् दशाऽवरान् ॥
कृत्वाऽभिषेकं तु नरः सोऽश्वमेधफलं लभेत् ।
स्वर्गलोकमवाप्नोति यावदाभूतसंप्लवम् ॥
पूर्वपार्श्वे तु गङ्गायास्त्रिषु लोकेषु भारत ।
कूपं चैव तु सामुद्रं प्रतिष्ठानं तु विश्रुतम् ॥
ब्रह्मचारी जितक्रोधस्त्रिरात्रं यदि तिष्ठति ।
सर्वपापविशुद्धात्मा सोऽश्वमेधफलं लभेत् ॥
उत्तरेण प्रतिष्ठानाद्भागीरथ्यास्तु पूर्वतः ।
हंसप्रतपनं नाम तीर्थं त्रैलोक्यविश्रुतम् ॥

1. P. विपुले यमुनातटे B. गङ्गायमुनयोस्तटे

अश्वमेधफलं तस्मिन् स्नानमात्रेण भारत ।
यावच्चन्द्रश्च सूर्यश्च तावत् स्वर्गे महीयते ॥
ऊर्वशीपुलिने रम्ये विपुले हंसपाण्डरे ।
परित्यज्यति यः प्राणान् शृणु तस्याऽपि यत्फलम् ॥
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ।
[1]स याति पितृभिः सार्धं स्वर्गलोके नराधिप ॥
ऊर्वशीं च सदा पश्येद्देवलोके नरोत्तम ।
पूज्यते सततं देवैर्ऋषिगन्धर्वकिन्नरैः ॥
ततः स्वर्गात् परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ।
ऊर्वशीसदृशीनां तु कन्यानां लभते शतम् ॥
मध्ये नारीसहस्राणां बह्वीनां च पतिर्भवेत् ।
दशग्रामसहस्राणां भोक्ता भवति भूमिपः ॥
काञ्चीनूपुरशब्देन सुप्तोऽसौ प्रतिबुध्यते ॥
भुक्त्वा तु विपुलान् भोगांस्तत्तीर्थं लभते पुनः ।
शुक्लाम्बरधरो नित्यं नियतः संयतेन्द्रियः ॥
एककालं तु भुञ्जानो मासं भोगपतिर्भवेत् ।
सुवर्णालंकृतानां तु नारीणां लभते शतम् ॥
पृथिव्यामासमुद्रायां महाभोगपतिर्भवेत् ।
धनधान्यसमायुक्तो दाता भवति नित्यशः ॥
स भुक्त्वा विपुलान् भोगांस्तत्तीर्थं स्मरते पुनः ।
अथ सन्ध्यावटे रम्ये ब्रह्मचारी जितेन्द्रियः ॥
उपासीत शुचिर्भूत्वा[2] ब्रह्मलोकमवाप्नुयात् ।
कोटितीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ॥

1. B. सेव्यते पितृभिः सार्धं स्वर्गलोके महीयते
2. P and B सन्ध्यां

कोटिवर्षसहस्राणां स्वर्गलोके महीयते ।
ततः स्वर्गात् परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ॥
सुवर्णमणिमुक्ताद्यैः कुले जायेत रूपवान् ।
ततो भोगवतीं गत्वा वासुकेरुत्तरेण तु ॥
दशाश्वमेधिकं नाम तत्र तीर्थं परं भवेत् ।
कृताभिषेकस्तु नरः सोऽश्वमेधफलं लभेत् ॥
धनाढ्यो रूपवान् साक्षाद्दाता भवति धार्मिकः ।
चतुर्वेदेषु यत्पुण्यं सत्यवादिषु यत्फलम् ॥
अहिंसायां तु यो धर्मो गमनादेव तत्फलम् ।

तथा[1]—

[2]मानसं नाम तीर्थं तु गङ्गाया उत्तरे तटे ।
त्रिरात्रोपोषितः स्नात्वा सर्वान् कामानवाप्नुयात् ॥
गोभूहिरण्यदानेन यत्फलं प्राप्नुयान्नरः ।
तत्फलं समवाप्नोति तत्तीर्थं स्मरते पुनः ॥
अकामो वा सकामो वा गङ्गायां यो विपद्यते ।
मृतस्तु लभते स्वर्गं नरकं न च पश्यति ।
अप्सरोगणसङ्गीतैः सुप्तोऽसौ प्रतिबुध्यते ॥
हंससारसयुक्तेन विमानेन स गच्छति ।
बहुवर्षसहस्राणि स्वर्गं राजेन्द्र भुञ्जते ॥
ततः स्वर्गात् परिभ्रष्टः क्षीणकर्मा दिवश्च्युतः ।
सुवर्णमणिमुक्ताढ्ये जायते विपुले कुले ॥

1. म. पु. अ. १०७
2. १०७, २-२९

षष्टितीर्थसहस्राणि षष्टितीर्थशतानि च ।
माघमासे गमिष्यन्ति गङ्गायमुनसङ्गमे ॥
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
प्रयागे माघमासे च त्र्यहं स्नातस्य तत्फलम् ॥
गङ्गायमुनयोर्मध्ये कर्षाग्निं यस्तु साधयेत् ।
अहीनाङ्गो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः ॥
यावन्ति रोमकूपानि तस्य गात्रेषु धीमतः ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
ततः स्वर्गात् परिभ्रष्टो जम्बूद्वीपपतिर्भवेत् ।
स भुक्त्वा विपुलान् भोगांस्तत्तीर्थं लभते पुनः ॥
जलप्रवेशं यत्कुर्यात् सङ्गमे लोकविश्रुते ।
राहुग्रस्ते यथा सोमे विमुक्तः सर्वपातकैः ॥
सोमलोकमवाप्नोति सोमेन सह मोदते ।
षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥
[1]स्वर्गलोकमवाप्नोति ऋषिगन्धर्वसेवितः ।
परिभ्रष्टस्तु राजेन्द्र समृद्धे जायते कुले ॥
अधःशिरास्तु यो ज्वालामूर्ध्वपादः पिबेन्नरः ।
शतं वर्षसहस्राणि स्वर्गलोके महीयते ॥
परिभ्रष्टस्तु राजेन्द्र अग्निहोत्री भवेन्नरः ।
भुक्त्वा तु विपुलान् भोगांस्तत्तीर्थं भजते पुनः ॥
यश्च देहं विकर्तित्वा[2] शकुनिभ्यः प्रयच्छति ।
विहगैरुपभुक्तस्य शृणु तस्याऽपि यत्फलम् ॥

1. P and B सूर्यलोकमवाप्नोति
2. P and B विग्निः कृत्वा

शतं वर्षसहस्राणां सोमलोके महीयते ।
तस्मादपि परिभ्रष्टो राजा भवति धार्मिकः ॥
गुणवान् रूपसंपन्नो विद्वांश्च प्रियवादकः ॥
भुक्त्वा तु विपुलान् भोगांस्तत्तीर्थं लभते पुनः ।
यामुने चोत्तरे कूले प्रयागस्य तु दक्षिणे ॥
ऋणप्रमोचनं नाम तीर्थं तु परमं स्मृतम् ।
एकरात्रोषितः स्नात्वा ऋणैः सर्वैः प्रमुच्यते ॥
स्वर्गलोकमवाप्नोति अनृणश्च सदा भवेत् ।

तथा—

मार्कण्डेय उवाच—

[1]शृणु राजन् प्रयागे तु अनाशकं फलं विभो ।
प्राप्नोति पुरुषो धीमान् श्रद्दधानो जितेन्द्रियः ॥
अहीनाङ्गो ह्यरोगश्च पञ्चेन्द्रियसमन्वितः ।
अश्वमेधफलं तस्य गच्छतस्तु पदे पदे ॥
कुलानि तारयेद्राजन् दश पूर्वान् दशाऽवरान् ।
मुच्यते सर्वपापेभ्यो गच्छेत परमं पदम् ॥

तथा—

मार्कण्डेय उवाच—

[2]शृणु राजन् महावीर यदुक्तं पद्मयोनिना ।
ऋषीणां सन्निधौ पूर्वं कथ्यमानं मया शुभम् ॥
पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् ।
प्रवेशात्तस्य तद्भूमौ सोऽश्वमेधः पदे पदे ॥

1. १०८, ३५
2. १०८, ८-१७

व्यतीतान् पुरुषान् सप्त भविष्यांश्च चतुर्दश ।
नरस्तारयते सर्वान् यस्तु प्राणान् परित्यजेत् ॥
एवं ज्ञात्वा तु राजेन्द्र सदा श्रद्धापरो भव ।
अश्रद्दधानाः पुरुषाः पापोपहतचेतसः ॥
न प्राप्नुवन्ति तत्स्थानं प्रयागं देवरक्षितम् ।

युधिष्ठिर उवाच—

स्नेहाद्वा द्रव्यलोभाद्वा ये तु कामवशं गताः ॥
कथं तीर्थफलं तेषां कथं पुण्यमवाप्नुयुः ।
विक्रयी सर्वभाण्डानां [1]कार्याकार्यमजानतः ॥
प्रयागे का गतिस्तस्य एतद्ब्रूहि महामुने ।

मार्कण्डेय उवाच—

शृणु राजन् महागुह्यं सर्वपापप्रणाशनम् ॥
मासमेकं तु स्नायीत प्रयागे नियतेन्द्रियः ।
मुच्यते सर्वपापेभ्यो [2]मयोद्दिष्टं स्वयम्भुवा[3] ॥
शुचिस्तु प्रयतो भूत्वाऽहिंसकः श्रद्धयाऽन्वितः ।
मुच्यते सर्वपापेभ्यः स गच्छेत् परमं पदम् ॥
[4]विश्वस्तघातकानां च प्रयागे शृणु यत्फलम् ।
त्रिकालमेव स्नायीत आहारं भैक्षमाचरेत् ॥
त्रिभिर्मासैः प्रमुच्येत प्रयागे नाऽत्र संशयः ।
अज्ञानेन तु यस्येह तीर्थयात्रादिकं भवेत् ॥

1. P. हर्षाहर्षमजानतः
2. P. यथादिष्टं
3. B. गच्छत्येव परं पदम्
4. P. विश्रम्भघातकानां

सर्वकामसमृद्धस्तु स्वर्गलोके महीयते ।
स्थानं च लभते नित्यं धनधान्यसमाकुलम् ॥
एवं ज्ञानेन संपूर्णः सदा भवति भोगवान् ।
तारिताः पितरस्तेन नरकात् सपितामहाः[1] ॥

तथा—

मार्कण्डेय उवाच—

[2]तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ।
समागता महाभागा यमुना यत्र निम्नगा ॥
येनैव निःसृता गङ्गा तेनैव यमुना गता ।
योजनानां सहस्रेषु कीर्तनात् पापनाशिनी ॥
तत्र स्नात्वा च पीत्वा च यमुनायां युधिष्ठिर ।
कीर्तनाल्लभते पुण्यं दृष्ट्वा भद्राणि पश्यति ॥
अवगाह्याऽथ पीत्वा च पुनात्यासप्तमं कुलम् ।
प्राणांस्त्यजति यस्तत्र स याति परमां गतिम् ॥
अग्नितीर्थमिति ख्यातं यमुनादक्षिणे तटे ।
[3]पश्चिमे धर्मराजस्य तीर्थं तु नवकं स्मृतम् ॥
तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ।
पञ्च तीर्थसहस्राणि यमुनादक्षिणे तटे ॥
उत्तरेण प्रवक्ष्यामि आदित्यस्य महात्मनः ।
तीर्थं नीरूजकं[4] नाम यत्र देवाः सवासवाः ॥

1. P. प्रपितामहाः
2. १०८, २३-३४
3. Here begins an unnumberd folio of P.
4. P. निरुदकं

उपासते सदा सन्ध्यां नित्यं काले युधिष्ठिर ॥
देवाः सेवन्ति तत्तीर्थं ये चाऽन्ये विदुषो जनाः ।
श्रद्दधानपरो भूत्वा कुरुतीर्थाभिषेचनम् ॥
अन्ये च बह्वस्तीर्थाः सर्वपापहराः स्मृताः ।
तेषु स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥
गङ्गा च यमुना चैव उभे तुल्यफले स्मृते ।
केवलं ज्येष्ठभावेन गङ्गा सर्वत्र पूज्यते ॥
एवं कुरुष्व कौन्तेय सर्वतीर्थाभिषेचनम् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥
यस्त्विदं कल्यमुत्थाय पठते च शृणोति च ।
मुच्यते सर्वपापेभ्यः स्वर्गलोकं स गच्छति ॥

तथा—

[1]जन्मान्तरसहस्रेभ्यो योगो लभ्येत वा न वा ।
तथा युगसहस्रेण योगो लभ्येत मानवैः ॥
यस्तु सर्वाणि रत्नानि ब्राह्मणेभ्यः प्रयच्छति ।
तेन दानेन दत्तेन योगो लभ्येत वा न वा ॥
प्रयागे तु मृतस्येदं सर्वं भवति नाऽन्यथा ।

तथा—

[2]शृणु राजन् प्रवक्ष्यामि माहात्म्यं पुनरेव तु ॥
नैमिशं पुष्करं चैव गोतीर्थं सिन्धुसागरम् ।
गया च धेनुकं चैव गङ्गासागरमेव च ॥
एते चाऽन्ये च बहवो ये च पुण्याः शिलोच्चयाः ।

1. १०९, १०-१२
2. ११०, १११

दशतीर्थसहस्राणि तिस्रः कोट्यस्तथाऽपराः ।
प्रयागे संस्थिता नित्यमेवमाहुर्मनीषिणः ॥
त्रीणि चाप्यग्निकुण्डानि येषां मध्ये तु जाह्नवी ।
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ॥
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ।
गङ्गया यमुना सार्धं सङ्गता लोकतारिणी[1] ।
गङ्गायमुनयोर्मध्ये पृथिव्यां जघनं स्मृतम् ॥
प्रयागं राजशार्दूल कलां नाऽर्हन्ति षोडशीम् ।
तिस्रः कोट्यर्धकोटी च तीर्थानां वायुरब्रवीत् ॥
दिवि भुव्यन्तरिक्षे च तत्सर्वं जाह्नवी स्मृता ।
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ ॥
भोगवत्यथ या चैषा वेदिरेषा प्रजापतेः ।
तत्र वेदाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर ॥
प्रजापतिमुपासन्ते ऋषयश्च तपोधनाः ।
यजन्ते क्रतुभिर्देवास्तथा चक्रधरा नृपाः ।
ततः पुण्यतमो नाऽस्ति त्रिषु लोकेषु भारत ॥
प्रयागे सर्वतीर्थेभ्यः प्रभवत्यधिकं विभो ।

तथा—

[2]पञ्चयोजनविस्तीर्णं प्रयागस्य तु मण्डलम् ।
तिष्ठते रक्षिणो यत्र पापकर्मनिवारणात् ॥
उत्तरेण प्रतिष्ठानं शाल्मली प्रतितिष्ठति[3] ।
महेश्वरो वटो भूत्वा तिष्ठते परमेश्वरः ॥

1. P and B लोकपाविनी
2. १११, ७-११
3. P. शाल्मली ब्रह्म तिष्ठति

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
रक्षन्ति मण्डलं सर्वं पापकर्मनिवारणात् ॥
युञ्जन् युञ्जन् स्वकं पापं नरकं न च पश्यति ।
एवं ब्रह्मा च विष्णुश्च प्रयागे नित्यमीश्वरः ॥

तथा—

[1]सितासितेषु यत् स्नानं माघमासे युधिष्ठिर ।
न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥
दशतीर्थसहस्राणि षष्टिकोटयस्तथाऽपराः ।
माघमासे प्रयागे तु गङ्गायमुनसङ्गमे ॥

प्रयागमाहात्म्ये, महाभारते—

ततः पुण्यतमं नाऽस्ति त्रिषु लोकेषु भारत ।
प्रयागं सर्वतीर्थेभ्यो प्रभवत्यधिकं विभो ।
श्रवणात्तस्य तीर्थस्य नामसंकीर्तनादपि ॥
[2][मृत्तिकालम्भनाद्वाऽपि नरः पापात् प्रमुच्यते ।
तत्राऽभिषेकं यः कुर्यात् सङ्गमे संशितव्रतः ॥
तुल्यं फलमवाप्नोति राजसूयाश्वमेधयोः ।
एषा यजनभूमिर्हि देवानामपि सत्कृता ॥
यत्र दत्तं सूक्ष्ममपि महद्भवति भारत ।
न वेदवचनाद्वाऽपि न लोकवचनादपि ॥]
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ।
दशतीर्थसहस्राणि षष्टिकोट्यस्तथाऽपराः ॥

1. १०७, ७
2. P and B supply these verses

येषां सान्निध्यमत्रैव कीर्तितं कुरुनन्दन ।
चतुर्वेदेषु यत् पुण्यं सत्यवादिषु चैव यत् ॥
स्नात एव तदाप्नोति गङ्गायमुनसङ्गमे ।
तत्र भोगवती नाम वासुकेस्तीर्थमुत्तमम् ॥
तत्राऽभिषेकं यः कुर्यात् सोऽश्वमेधमवाप्नुयात् ।
तत्र हंसप्रतपनं तीर्थं त्रैलोक्यविश्रुतम् ॥
दशाश्वमेधिकं चैव गङ्गायां कुरुनन्दन ।
यत्र गङ्गा महाराज स देशस्तु तपोवनम् ॥
सिद्धिक्षेत्रं हि तज्ज्ञेयं गङ्गातीरसमाश्रितम् ।

॥ इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे प्रयागमाहात्म्यं
समाप्तम् ॥

॥ ४ ॥

## ॥ अथ गङ्गामाहात्म्यम् ॥

तत्र महाभारते—

शिलवृत्तिरुवाच[1]—

के देशाः के जनपदाः [2]के ग्रामाः के च पर्वताः ।
प्रकृष्टाः पुण्यतमका ज्ञेया नद्यस्तदुच्यताम् ॥

सिद्ध उवाच—

ते देशास्ते जनपदास्ते[3] ग्रामास्ते च पर्वताः ।
येषां भागीरथी गङ्गा मध्ये याति सरिद्वरा ॥
तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ।
गतिं न लभते जन्तुर्गङ्गां संसेव्य तां लभेत् ॥
स्पृष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम् ।
व्यस्तानि ये पुनस्तेषां वासः स्वर्गाद्विधीयते ॥
सर्वाणि येषां गाङ्गेयैस्तोयैः कर्माणि[4] देहिनाम् ।
गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति ते जनाः ॥
पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः ।
पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् ॥

1. Here begins P. folio. 38—while fol. 37 ends with पश्यति on l. 1 of p. 298 infra.

2. B. के आश्रमाः

3. B. ते आश्रमाः

4. P and B कार्याणि

स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम् ।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ।
यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।
अपहृत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथाऽपहृत्य पाप्मानं भाति गङ्गाजलोक्षितः ॥

तथा—

त्रिषु लोकेषु ये केचित् प्राणिनः सर्व एव ते ।
तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः ॥
यस्तु सूर्येण [1]निष्टप्तं गाङ्गेयं पिबते जलम् ।
गवां निर्हारनिर्मुक्ता यावत्काशविशिष्यते ॥
इन्दुव्रतसहस्रं तु यश्चरेत् कायशोधनम् ।
पिबेद्यश्चाऽपि गङ्गाम्भः समौ स्यातां न वा समौ ॥
[[2]तिष्ठेद्युगसहस्रं तु पादेनैकेन यः पुमान् ।
मासमेकं तु गङ्गायां समौ स्यातां न वा समौ ॥]
लम्बेताऽवाक्शिरा यस्तु युगानामयुतं पुमान् ।
तिष्ठेद्यथेष्टं यश्चाऽपि गङ्गायां स विशिष्यते ॥
अग्नौ प्राप्तं प्रधूयन्ते यथा तूलं द्विजोत्तम ।
तथा गङ्गावगाढस्य सर्वपापं प्रधूयते ॥
भूतानामपि सर्वेषां दुःखोपहतचेतसाम् ।
गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ॥

1. P. तिष्ठन्तं
2. P and B supply this śloka, which is missing in U.

भवन्ति निर्विषाः सर्पाः यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनात्तद्वत् सर्वपापैः प्रमुच्यते ॥
अप्रतिष्ठाश्च ये केचिदशर्मशरणाश्च ये ।
तेषां प्रतिष्ठा गङ्गेह शरणं[1] शर्म मर्म च ॥
प्रकृष्टैरशुभैर्ग्रस्तानेकैः पुरुषाधमान् ।
पततो नरके गङ्गा संश्रितान् प्रेत्य तारयेत् ।
तेषां विमुक्ता मुनिभिर्नूनं देवैः सवासवैः ॥
येऽभिगच्छन्ति सततं गङ्गां मतिमतां वर[2] ।
विनयाचारहीनाश्च अशिवाश्च नराधमाः ॥
ते भवन्ति शिवा विप्रा ये वै गङ्गासमाश्रिताः ।

तथा—

जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः ॥
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम्[3] ।

तथा—

वाङ्मनःकर्मभिर्ग्रस्तः पापैरपि पुमानिह ।
वीक्ष्य गङ्गां भवेत् पूतस्तत्र मे नाऽस्ति संशयः ॥
सप्ताऽवरान् सप्त परान् पितॄनेभ्यश्च ये परे ।
पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वाऽवगाह्य च ॥
[4][गङ्गां दृष्ट्वाऽथ पापी च स्नात्वा गङ्गेति कीर्तनात् ।
त्रयोदशाऽर्जितं पापं जन्मजं नश्यति ध्रुवम् ॥]

1. P. शर्म शर्म च
2. P and B अभिमतां सुरैः
3. B. नाशात् सुनिर्मलः
4. Omitted verse supplied by P, which notes the śloka on the margin. It is missing in B.

श्रुताऽभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता ॥
गङ्गा तारयते पुंसामुभौ वंशौ विशेषतः ।
दर्शनात् स्पर्शनात् स्नानात् तथा गङ्गेति कीर्तनात् ॥
पुनात्यपुण्यान् पुरुषान् शतशोऽथ सहस्रशः ।
य इच्छेत् सफलं जन्म जीवितं श्रुतमेव च ।
स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा ॥
न सुतैर्न च वित्तेन कर्मणा न च तत् फलम् ।
प्राप्नुयात् पुरुषोऽत्यन्तं गङ्गां प्राप्तो यदाऽप्नुयात् ॥
जात्यन्धैरिह तुल्यास्ते मूकैः पङ्गुभिरेव च ।
समर्था येन पश्यन्ति गङ्गां पुण्यजलां शुभाम् ॥
भूतभव्यभविष्यज्ञैर्महर्षिभिरुपस्थिताम् ।
देवैः सेन्द्रैश्च को गङ्गां नोपसेवेत मानवः ॥
वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः ।
विद्यावद्भिः श्रितां गङ्गां पुमान् को नाम नाऽऽश्रयेत् ॥
उत्क्रामद्भिश्च यत् प्राणैः प्रयतः शिष्टसम्मतः ।
चिन्तयेन्मनसा गङ्गां स गतिं परमां लभेत् ॥
न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ।
आदेहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥

तथा—

तद्भावस्तद्गतमनास्तन्निष्ठस्तत्परायणः ।
गङ्गां योऽनुगतो भक्त्या स तस्याः प्रियतां व्रजेत् ॥
भूस्थैः खस्थैर्दिवस्थैश्च भूतैरुच्चावचैरपि ।
[2]गङ्गाऽवगाह्या सततमेतत्कार्यसमं सताम् ॥

1. P and B omit the next four lines.
2. P. गङ्गा विगाह्या सततं   B omits this line

तथा—

गङ्गां गत्वा यैः शरीरं विसृष्टं
गता [1]धीरास्ते विबुधैः समत्वम् ।
अन्धान् जडान् द्रव्यहीनांश्च गङ्गा
यशस्विनी बृहती विश्वरूपा ॥
देवैः सेन्द्रैर्मुनिभिर्मानुषैश्च
निषेविता सर्वकामैर्युनक्ति ॥
उज्जीवन्तीं महापुण्यामंशुमन्तीं त्रिवर्त्मगाम् ।
त्रिलोकगोप्त्रीं ये गङ्गां संश्रितास्ते दिवङ्गताः ॥
यो वत्स्यते द्रक्ष्यति वाऽपि मर्त्य
तस्मै प्रयच्छन्ति सुखानि देवाः ।
[2]अन्धा क्लीबा जडा व्यङ्गाः पतिता रोगिणोऽन्त्यजाः ।
गङ्गां संसेव्य पुरुषा देवैर्गच्छन्ति तुल्यताम् ॥
दूरस्थोऽपि हि यो ब्रूयात्त्रिसन्ध्यं नियतः शुचिः ।
गङ्गा गङ्गेति गङ्गेति स गच्छेत् परमां गतिम् ॥

जडान्धप्रभृतयः कर्मान्तरानधिकारिणोऽपि गङ्गासेवयाऽभिमतफलभागिनो भवन्तीत्यर्थः ॥

[3]ब्रह्मपुराणे—

वर्णानां ब्राह्मणो यद्वत्तथा तीर्थेषु जाह्नवी ।
स्वर्गस्थैर्गगनस्थैश्च तथा पातालवासिभिः ॥
अवगाह्या सदा गङ्गा पूज्या वन्द्या च सर्वदा ।
षष्ठ्यादौ कृष्णपक्षे तु भूमौ सन्निहिता भवेत् ॥

1. P. वीराः
2. Two ślokas are omitted by P and B.
3. P omits ब्रह्मपुराणे

यावत्पुण्याममावास्यां दिनानि दश नित्यशः ।
शुक्लप्रतिपदारभ्य दिनानि दशसंख्यया ॥
पाताले सन्निधानं तु करोति स्वयमेव हि ।
शुक्लैकादशिकादह्न आरभ्य दश यानि तु ॥
पञ्चम्यन्तानि सा स्वर्गे भवेत् सन्निहिता सदा ।
श्रुताऽभिलपिता दृष्टा स्पृष्टा पीताऽवगाहिता ॥
गङ्गा तारयते नृणामुभौ वंशौ भवार्णवात् ।
दर्शनात् स्पर्शनात् पानात्तथा गङ्गेति कीर्तनात् ॥
पुनात्यपुण्यान् पुरुषान् मातेव जगतो हिता ।
अशुभैः कर्मभिर्ग्रस्तान् मज्जमानान् भवार्णवे ॥
पततो नरके गङ्गा संश्रितानुद्धरेत् सदा ।
अवगाहनमात्रेण मानवानां सदैव हि ॥
पापौघं निर्दहेद्गङ्गा तूलराशिमिवाऽनलः ।

तथा—

विनयाचारहीनाश्च ये भवन्त्यशुभा नराः ।
गङ्गामाश्रित्य सर्वे ते भवन्ति विमलाः शुभाः ॥

[[1]तथा—]

न पुत्रैर्न महादानैर्न चाऽन्यैश्च सुकर्मभिः ।
भवेत् पुण्यफलं पुंसां यथा लब्ध्वाऽनुजाह्नवीम् ॥

मत्स्यपुराणे—

[2]कुरुक्षेत्रसमा गङ्गा यत्र तत्राऽवगाहिता ।

1. P and B supply this omission
2. १०६, ४९-५६

कुरुक्षेत्राद्दशगुणा यत्र विन्ध्येन संगता ॥
विन्ध्याच्छतगुणा प्रोक्ता काशिपुर्यां तु जाह्नवी ।
यत्र गङ्गा महाभागा बहुतीर्थतपोधना ॥
सिद्धिक्षेत्रं हि तज्ज्ञेयं नाऽत्र कार्या विचारणा ।
क्षितौ तारयते मर्त्यान्नागांस्तारयतेऽप्यधः ॥
दिवि तारयते देवांस्तेन त्रिपथगा स्मृता ।
यावदस्थीनि तिष्ठन्ति गङ्गायां यस्य देहिनः ॥
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ।
तीर्थानां परमं तीर्थं नदीनां परमा नदी ॥
मोक्षदा सर्वभूतानां महापातकिनामपि ।
सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ॥
गङ्गाद्वारे प्रयागे च गङ्गासागरसंगमे ।
तेऽत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥
सर्वेषामेव भूतानां तापोपहतचेतसाम् ।
गतिमन्वेषमाणानां नाऽस्ति गङ्गासमा गतिः ॥
पवित्राणां पवित्रं तु मङ्गलानां च मङ्गलम् ।
महेश्वरशिरोद्भूता सर्वपापहरा शुभा ॥

तथा—

[1]योजनानां सहस्रेषु गङ्गां यः स्मरते नरः ।
अपि दुष्कृतकर्माऽसौ लभते परमां गतिम् ॥
कीर्तनान्मुच्यते पापाद्दृष्ट्वा भद्राणि पश्यति ।
अवगाह्य च पीत्वा च पुनात्यासप्तमं कुलम् ॥

1. १०४, १४-१५

विष्णुपुराणे—

[1]ततः प्रभवति ब्रह्मन् सर्वपापहरा सरित् ।
गङ्गा देवाङ्गनाङ्गानामनुलेपनपिञ्जरा ॥
वामपादाम्बुजाङ्गुष्ठनखस्रोतोविनिर्गता ।
विष्णोर्बिभर्ति यां भक्त्या शिरसाऽहर्निशं शिवः ॥
ततः सप्तर्षयो यस्यां प्राणायामपरायणाः ।
तिष्ठन्ति वीचिमालाभिरुह्यमाना जटा जले ॥
वायोर्वैराहतैर्यस्याः[2] प्लावितं शशिमण्डलम् ।
भूयोऽधिकतरां कान्तिं वहत्येतदहःक्षये ॥
मेरुपृष्ठे पतत्युच्चैर्निष्क्रान्ता शशिमण्डलात् ।
जगतः [3]पावनार्थाय प्रयाति च चतुर्दिशम् ॥
शीता चाऽलकनन्दा च चक्षुर्भद्रा च संस्थिता ।
एकैव या चतुर्भेदा दिग्भेदगतिलक्षणा ॥
भेदं चाऽलकनन्दाख्यं यस्याः सर्वोपदक्षिणम् ।
दधार शिरसा प्रीत्या वर्षाणामधिकं शतम् ॥
शम्भोर्जटाकलापाच्च निष्क्रान्ता अस्थिशर्करा ।
प्लावयित्वा दिवं नित्यं या पापान् सगरात्मजान् ॥
स्नातस्य सलिले यस्याः सद्यः पापं प्रणश्यति ।
अपूर्वपुण्यप्राप्तिश्च सद्यो मैत्रेय जायते ॥
दत्ताः पितृभ्यो यत्राऽऽपस्तनयैः श्रद्धयाऽन्वितैः ।
समात्रयं[4] प्रयच्छन्ति तृप्तिं मैत्रेय दुर्लभाम् ॥
यस्यामिष्ट्वा महायज्ञैर्यज्ञेशं पुरुषोत्तमम् ।
द्विज भूपाः[5] परां सिद्धिमवापुर्दिवि चेह च ॥

1. २, ८, १०८-१२२
2. P. वीर्यौघैः सततं यस्याः
3. P and B पालनार्थाय
4. Printed विष्णुपुराण reads समाशतं
5. B. द्विजरूपाः

स्नाता निर्धूतपापाश्च यज्जले यत्तपस्तथा ।
केशवासक्तमनसः प्राप्ता निर्वाणमुत्तमम् ॥
स्तुताऽभिलषिता दृष्टा स्पृष्टा पीताऽवगाहिता ।
या पावयति भूतानि कीर्तितानि दिने दिने ॥
गङ्गा गङ्गेति यैर्नाम योजनानां शतैरपि ।
स्थितैरुच्चरितं हन्ति पापं जन्मत्रयार्जितम् ॥
[1]ततः सा पावनायाऽत्र जगतां तिसृणामपि ।
समुद्भूता परं तत्तु तृतीयं भगवत्पदम् ॥

तथा—

[2]भगवद्विष्णुपादाङ्गुष्ठविनिर्गतस्य हि जलस्यैतन्माहात्म्यमयन्न केवलमभिसन्धिपूर्वकं स्नानाद्युपयोगेषूपकारकम् । अनभिसंहितमप्यपेतप्राणस्याऽस्थिचर्मस्नायुकेशाद्युत्सृष्टं शरीरजमपि तदुपनिपतितं सद्यः शरीरिणं स्वर्गं नयति ॥

महाभारते—

मेरोः समुद्रस्य च सर्वरत्नैः
संख्योपलानामुदकस्य वाऽपि ॥
शक्यं वक्तुं नेह गङ्गाजलानां
गुणाख्यानं परिमाणं तथैव ॥

॥ इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिक[3]भट्टश्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे गङ्गामाहात्म्यं
समाप्तम् ॥

1. B omits this verse. For जगतां तिसृणामपि, which is ungrammatical, the printed text (edn. Gorakhpur, p. 165) reads यतः सा पावनायाऽलं त्रयणां जगतामपि ।

2. ४, ४, २९-३०

3. B. विग्रहिक

॥ ९ ॥

# ॥ अथ गयामाहात्म्यम् ॥

तत्र मत्स्यपुराणे—

[1]पितृतीर्थं गया नाम सर्वतीर्थवरं शुभम् ।
यत्राऽऽस्ते देवदेवेशः स्वयमेव पितामहः ॥
यत्रैषा पितृभिर्गीता गाथा भोगमभीप्सुभिः ।
"एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ।"

वराहपुराणे—

सनत्कुमार उवाच—

[2]धन्यस्त्वमेव द्विजमुख्यवर्य
यद्वेदवादाभिरतः पितॄंश्च ।
प्रीणाति मन्त्रव्रतहोमजप्यै-
र्गयां समासाद्य तथाऽनुपिण्डैः[3] ॥
शृणुष्व वाक्यं नृपतिर्बभूव
विशालनामा स पुरीं विशालाम् ।
उवास धन्यां धृतिमानपुत्रः
स्वयं विशालाधिपतिर्द्विजाग्र्याम् ॥

1. २२, ४-६; cited in तीर्थचिन्तामणि, p. 269 as from कल्पतरु
2. ७, १२-२९; cited in तीर्थचिन्तामणि, pp. 270-272, as from कल्पतरु
3. P. अन्नपिण्डैः

पप्रच्छ पुत्रार्थममित्रहन्ता
तं ब्राह्मणाश्चोचुरदीनसत्त्वाः ।
राजन् पितॄंस्तर्पय पुत्रहेतो-
र्दत्त्वा गयायां विधिवत्तु पिण्डान् ॥
ध्रुवं सुतस्ते भविता नृवीर
सहस्रदाता सकलक्षितीशः ।
इतीरिते ब्राह्मणैः संप्रहृष्टो
राजा विशालाधिपतिः प्रयत्नात् ॥
समागतस्तीर्थवरं द्विजेश
गयामिमां तद्गतमानसस्सन् ।
आगत्य सोऽथ प्रवरं सुतार्थी
गयाशिरो यागपरः पितॄणाम् ॥
पिण्डप्रदानं विधिना प्रयच्छं-
स्तावद्वियत्युत्तममूर्तियुक्तान् ।
पश्यन् स पुंसः सितरक्तकृष्णा-
नुवाच राजा किमिदं भवद्भिः ॥
समीक्ष्यते शंसत सर्वमेतत्
कुतूहलं मे मनसि प्रवृत्तम् ।

सित उवाच—

अहं सितस्ते जनकोऽस्मि तात
नाम्ना च वृत्तेन च कर्मणा च ।
अयं च मे जनको रक्तवर्णो
नृशंसकृद्ब्रह्महा पापकारी ॥

अधीश्वरः [1]शृणु परः पिताऽस्य
कृष्णो नाम्ना कर्मणा वर्णतश्च ।
एतेन कृष्णेन हतः पुरा वै
जन्मान्यनेकान्यृषयः पुराणाः ॥

तथा—

एतौ मृतौ द्वावपि पितृपुत्रा-
ववीचिसंज्ञं नरकं प्रपन्नौ ।
[1]अधीश्वरोऽयं जनकः परोऽस्य
तौ कृष्णरक्तावपि दीर्घकालम् ॥
अहं च शुद्धेन निजेन कर्मणा
शक्रासनं प्राप्य सुदुर्लभं तत् ।
त्वया पुनर्मन्त्रविदा गयायां
पिण्डप्रदानेन बलादिमौ च ॥
मोक्षापितौ तीर्थवरप्रभावा-
दवीचिसंज्ञं नरकं गतौ तौ ॥
पितॄन् पितामहांश्चैव तथैव प्रपितामहान् ।
प्रीणयामीति यत्तोयं त्वया दत्तमरिन्दम ॥
तेनाऽस्मद्युगपद्योगो जातो वाक्येन सत्तम ।
तीर्थप्रभावाद्गच्छामः पितृलोकं न संशयः ॥
तत्र पिण्डप्रदानेन एतौ तव पितामहौ ।

'पितामहौ' पितामहप्रपितामहौ ॥

1. P. श्वाऽपरः ; आन्ध्रेश्वरः इति तीर्थचिन्तामणौ (p. 271)

दुर्गतावपि संसिद्धौ पापाद्धिकृतिलिङ्गिनौ ॥
तीर्थप्रभाव एषोऽत्र ब्रह्मघ्नस्याऽपि सत्तम ।
पितुः पिण्डप्रदानेन कुर्यादुद्धरणं सुतः ॥
एतस्मात् कारणात् पुत्र अहमेतौ विगृह्य तु ।
आगतोऽस्मि भवन्तं वै द्रष्टुं यास्यामि सांप्रतम् ॥

'विगृह्य' गृहीत्वा ॥

तथा—

एतस्मात् कारणाद्रैभ्य भवान्[1] धन्यो मयोच्यते ।
सकृद्गयाऽभिगमनं सकृत् पिण्डप्रपातनम् ॥
दुर्लभत्वं पुनर्नित्यमस्मिन्नेव व्यवस्थितिः ।
किमत्र प्रोच्यते रैभ्य तव पुण्यमिति प्रभो ॥
येन शार्ङ्गगदापाणिर्दृष्टो नारायणः स्वयम् ।
यतो गदाधरः साक्षादस्मिंस्तीर्थे व्यवस्थितः ॥
अतो हि विख्याततमं तीर्थमेतद् द्विजोत्तम ।

ब्रह्मपुराणे—

[[2]कियत्ते पतितानां च गते संवत्सरे क्वचित् ।
देशधर्मप्रमाणत्वाद्गयाकूपे स्वयं भुवि ॥
मार्तण्डपादमूले वा श्राद्धं हरिहरं स्मरन् ।

वामनपुराणे]—

प्रेतराजो वणिजं कश्चित् प्रत्याह—

गयायां तीर्थजुष्टायां स्नात्वा शौचसमन्वितः ॥

1. B. कारणात्तस्य; this verse is placed after line 2 above in तीर्थचिन्तामणि

2. Omission supplied by P and B

मम नाम समुद्दिश्य पिण्डनिर्वपणं कुरु ।
तत्र पिण्डप्रदानेन प्रेतभावादहं सखे ॥
मुक्तस्तु सर्वद्रष्टृणां यास्यामि शुभलोकताम् ।
इत्येवमुक्त्वा वणिजं प्रेतराजोऽनुजैः सह ॥
स्वनामानि यथान्यायं सम्यगाख्यातवाञ्छुचिः ।
तथाऽर्चयित्वा प्रययौ गयाशिरमनुत्तमम् ॥
पिण्डनिर्वपणं तत्र प्रेतानामनुपूर्वशः ।
चकार च सदा प्राणान्[1] पितॄंश्चक्रे त्वनन्तरम् ॥
आत्मनश्च महाबुद्धिर्महाबोधौ तिलैर्विना ।
पिण्डनिर्वपणं चक्रे तथाऽन्यानपि गोत्रजान् ॥
एवं प्रदत्तेष्वथ च पिण्डेषु प्रेतभावतः ।
विमुक्तास्ते द्विजाः प्राप्य ब्रह्मलोकं ततो गताः ॥

वायुपुराणे—

आनन्त्याय भवेदन्नं खड्गमांसं पितृक्षये ।
कृष्णच्छागस्तथा लोह आनन्त्याय प्रकल्पयेत् ॥
गयायामक्षयं श्राद्धं जपहोमतपांसि च ।
पितृक्षयो हि तत्पुत्र तेन तत्राऽक्षयं भवेत् ॥

बृहस्पतिः[2]—

काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ।
गयां यास्यति यः कश्चित् सोऽस्मान् सन्तारयिष्यति ॥
गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम् ॥

1. P. स्वदायादान्
2. बृहस्पतिः, आ. का. ६५, ६७, ५१

ब्रह्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च ।
दृष्ट्वैतानि पितॄंश्चाऽऽर्च्य वंशान् विंशतिमुद्धरेत् ॥

वायुपुराणे—

गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गवां गृध्रवटे चैव श्राद्धं तत्तन्महाफलम् ॥
भरतस्याऽऽश्रमे पुण्ये नित्यं पुण्यतमैर्वृते ।
मतङ्गस्य पदं तत्र दृश्यते सर्वमानुषैः ॥
ख्यापितं धर्मसर्वस्वं लोकस्याऽस्य निदर्शनात् ।
यच्चम्पकवनं पुण्यं पुण्यकृद्भिर्निषेवितम् ॥
तस्मिन् पाण्डुविशाल्येति तीर्थं सद्यो निदर्शनम् ।
तृतीयायां तथा पादे निश्चीवायाश्वमण्डले ॥
महाह्रदे च कौशिक्यां दत्तं श्राद्धं महाफलम् ।
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥
बहून् वर्षगणांस्तप्त्वा तपस्तीव्रं[1] सुदुश्चरम् ।
अल्पेनाऽप्यत्र कालेन भवेद्धर्मपरायणः ॥
पाप्मानमुत्सृजत्याशु जीर्णां त्वचमिवोरगः ।
नाम्ना कनखलं विप्र तीर्थं जगति विश्रुतम् ॥
उदीच्यां मुण्डपृष्ठस्य ब्रह्मर्षिगणसेवितम् ।
तत्र स्नात्वा दिवं यान्ति स्वशरीरेण मानवाः ॥
दत्तं चाऽपि सदा श्राद्धमक्षयं समुदाहृतम् ।
स्नात्वा ऋणत्रयं तत्र निष्क्रीणाति नरोत्तम ॥
मानसे सरसि स्नात्वा श्राद्धं निर्वर्तयेत्ततः ।
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥

1. B. तपस्ततम्

तस्मिन्निर्वर्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ।
कामान् स लभते दिव्यान् मोक्षोपायांश्च कृत्स्नशः ॥

महाभारते—

पुलस्त्यतीर्थयात्रायाम्—

[1]ततो गयां समासाद्य ब्रह्मचारी जितेन्द्रियः ।
अश्वमेधमवाप्नोति गमनादेव भारत ॥
यत्राऽक्षयवटो नाम त्रिषु लोकेषु विश्रुतः ।
यत्र दत्तं पितृभ्यस्तु भवत्यक्षय्यमित्युत ॥
महानद्यामुपस्पृश्य तर्पयेत् पितृदेवताः ।
अक्षयान् प्राप्नुयाल्लोकान् कुलं चैव समुद्धरेत् ॥
ततो ब्रह्मसरो गच्छेद्ब्रह्मारण्योपशोभितम् ।
ब्रह्मलोकमवाप्नोति प्रभातमिव शर्वरी ॥

ब्रह्मणा तत्र सरसि यूपः पुण्यः प्रकल्पितः ।
यूपं प्रदक्षिणं कृत्वा वाजपेयफलं लभेत् ॥
ततो गच्छेत राजेन्द्र धेनुकं लोकविश्रुतम् ।
एकरात्रोषितो यत्र प्रयच्छेत्तिलधेनुकाम् ॥
सर्वपापविशुद्धात्मा सोमलोकं व्रजेद्ध्रुवम् ।
तत्र चिह्नं महाराज अद्याऽपि महदद्भुतम् ॥
कपिला सहवत्सा वै पूर्वमेव चरत्युत ।
सवत्सायाः पदानि स्म दृश्यन्तेऽद्याऽपि तत्र वै ॥
तं यूपं स्पृश्य राजेन्द्र पादेषु नृपसत्तम ।

1. वन, ८२, ८१-१०३ ; तीर्थचिन्तामणि, p. 273-274

यत्किंचिदशुभं कर्म तत्प्रणश्यति भारत ।
ततो गृध्रवटं गच्छेत् स्थानं देवस्य धीमतः ॥
स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ।
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम् ॥
इतरेषां तु वर्णानां सर्वपापं प्रणश्यति ।
उद्यन्तं च ततो गच्छेत् पर्वतं गीतवादिनम्[1] ॥
सावित्र्यास्तु पदं तत्र दृश्यते भरतर्षभ ।
तत्र सन्ध्यामुपासीत ब्राह्मणः संशितव्रतः ॥
उपासिता भवेत् सन्ध्या तेन द्वादशवार्षिकी ।
[2]योनिद्वारं च तत्रैव [3]दृश्यते भरतर्षभ ॥
तत्राऽभिगम्य मुच्येत पुरुषो योनिसंकटात् ।
शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नरः ॥
पुनात्यासप्तमं चैव कुलं नाऽस्त्यत्र संशयः ॥
"एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
[4]यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥"
ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप ।
अश्वमेधवाप्नोति सिद्धिं च परमां लभेत् ॥
ततो गच्छेत्तु राजेन्द्र धर्मपृष्ठं महाफलम् ।
तत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥
अभिगम्य ततस्तत्र वाजिमेधफलं लभेत् ।
ततो गच्छेत्तु राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम् ॥

1. B. गीतनादितम् which is the variant adopted by तीर्थ-चिन्तामणि
2. B omits this hemistich
3. P. विद्यते
4. P and B omit the three lines below

तत्राऽभिगम्य राजेन्द्र ब्रह्माणं भरतर्षभ ।
राजसूयाश्वमेधाभ्यां फलमाप्नोति मानवः ॥

तथा—

धौम्यतीर्थयात्रायाम्—

[1]पूर्वं प्राचीं दिशं राजन् राजर्षिगणसेवितम् ।
रम्यां ते कीर्तयिष्यामि युधिष्ठिर यथास्मृति ॥
[2]यस्यां गिरिवरः पुण्यो गतो राजर्षिसत्कृतः ।
शिवं ब्रह्मसरो यत्र सेवितं तत्र चर्षिभिः ॥

यदर्थं पुरुषव्याघ्र कीर्तयन्ति पुरातनाः ।
"एष्टव्या बहवः पुत्राः यद्येकोऽपि गयां व्रजेत् ॥
[3]संतारयति संतत्या दश पूर्वान् दशाऽवरान् ।"
महानदी च तत्रैव तथा गयशिरो नृप ॥
यत्राऽसौ कीर्त्यते विप्रैरक्षय्यंकरणो वटः ।
यत्र दत्तं पितृभ्योऽन्नमक्षय्यं भवति प्रभो ॥
सा च पुण्यजला यत्र [4]फल्गुनामा महानदी ।
बहुमूलफला चाऽपि कौशिकी भरतर्षभ ॥

तथा—

लोमशतीर्थयात्रायाम्—

[5]ततो महीधरं जग्मुर्धर्मज्ञेनाऽभिरक्षितम् ।
राजर्षिणा पुण्यकृता गयेनाऽनुपमद्युते ॥

1. वन, ८५, ५
2. P' omits three lines from here
3. P. उत्तारयति
4. P. फाल्गुनामा
5. B. वन, ९३, ९-१२, १६

नगो गयशिरो यत्र पुण्या चैव महानदी ।
ऋषिजुष्टं महापुण्यं तीर्थं ब्रह्मसरोऽतुलम् ॥
अगस्त्यो भगवान् यत्र यतो वैवस्वतं प्रति ।
उवास च स्वयं तत्र धर्मराजः सवाहनः ॥
सर्वासां सरितां यत्र समुद्भेदो विशां पते ।
यत्र सन्निहितो नित्यं महादेवः पिनाकधृक् ।
तत्र ते पाण्डवा वीराश्चातुर्मास्यैस्तदेजिरे ।
ऋषियज्ञेन महता यत्राऽक्षय्यवटो महान् ॥

तथा—

बलभद्रतीर्थयात्रायाम्—

गयस्य यजमानस्य गयस्येव महाक्रतुः ।
आहूता सुसरिच्छ्रेष्ठा यत्र यज्ञे सरस्वती ॥
विशालां तु गयेष्वाहुर्ऋषयः संशितव्रताः ।
'गयस्येवेति' यज्ञस्य तेनैवोपमानमतिप्रशंसार्थम् ॥

तथा—

आङ्गिरसतीर्थयात्रायाम्—

मुण्डपृष्ठं गयां चैव नैर्ऋतं देवपर्वतम् ।
तृतीयां क्रौञ्चपादीं च ब्रह्महत्त्या विमुच्यते ॥

वामनपुराणे—

प्रह्लादतीर्थयात्रायाम्—

गयायां गोपतिं द्रष्टुं स जगाम महासुरः ।
[1]सरसि ब्रह्मणः स्नात्वा कृत्वा चाऽस्य प्रदक्षिणम् ॥

1. वा. पु. अ. ८३, ४, स्नात्वा ब्रह्मतडागे तु (Venkateśwar edn. p. 138).

पिण्डनिर्वपणं पुण्यं पितॄणां स चकार ह ।

नरसिंहपुराणे—

शिवनद्यां शिवकरं गयायां च जनार्दनम् ।
सर्वत्र परमात्मानं यः पश्यति स मुच्यते ॥

मत्स्यपुराणे—

गौरीस्थानप्रतिपादनप्रस्तावे—

वाराणस्यां विशालाक्षी प्रयागे ललिता तथा ।
गयायां मङ्गला नाम कृतशौचे तु सिंहिका[1] ॥

याज्ञवल्क्यः—

यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते[2] ।

विष्णुः—

[3]अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः ।
गयाशीर्षे वटे श्राद्धं यस्तु[4] कुर्यात् समाहितः ॥

यमः—

"एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ।
तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत् ।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥"

1. P and B हेतुका
2. आ. २६१
3. ८५, ६६
4. यो नः मु. पु.

वसिष्ठः—

नन्दन्ति पितरस्तस्य सुवृष्टेरिव कर्षकाः ।
यद्गयास्थोऽददात् पुण्यं[1] पितरस्तेन पुत्रिणः ॥

॥ इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे गयामाहात्म्यं
समाप्तम् ॥

1. P. ददात्यन्नं ; so also तीर्थचिन्तामणिपाठः

॥ ६ ॥

## ॥ अथ कुरुक्षेत्रमाहात्म्यम् ॥

तत्र वामनपुराणे[1]—

कुरुरुवाच—

यावदेतन्मया कृष्टं धर्मक्षेत्रं तदस्तु च ।
स्नातानां च मृतानां च महापुण्यफलं त्विह[2] ॥
उपवासं च दानं च स्नानं जप्यं च माधव ।
होमो यज्ञादिकं चाऽन्यच्छुभं वाऽप्यशुभं विभो ॥
त्वत्प्रसादाद्धृषीकेश शङ्खचक्रगदाधर ।
अक्षयं प्रवरक्षेत्रे भवत्वत्र महत् फलम् ॥
तथा त्वं च सुरैः सार्धं समं देवेन शूलिना ।
वसाऽत्र पुण्डरीकाक्ष मन्नाम्ना चेदमुच्यते ॥
इत्येवमुक्तस्तेनाऽहं राज्ञा वै दत्तवान् वरम् ।
तथा च त्वं दिव्यवपुर्भव भूयो महीपते ॥
तथाऽन्तकाले मामेव लयमेष्यसि सुव्रत ।
कीर्तिश्च शाश्वती तुभ्यं भविष्यति न संशयः ॥
कलिद्वापरयोर्मध्ये व्यासेन च महात्मना ।
सरःप्रमाणं यत्प्रोक्तं तच्छृणुध्वं द्विजोत्तमाः ॥

1. सर्ग, ५२ (पृ. ७२ आरम्य)
2. B. शृणु

विश्वेश्वरादस्ति पुरा तथाऽरण्या[1] जरद्गवी ।
[2]यावद्गौर्जरती प्रोक्ता तावत्सन्निहितं सरः ॥
मया श्रुतं प्रमाणं तु पच्यमानं[3] च वामने ।
तच्छृणुध्वं द्विजश्रेष्ठाः पुण्यवृद्धिकरं महत् ॥
विश्वेश्वरादेकरात्रिर्यावच्चाऽथ सरस्वती ।
सरः सन्निहितं ज्ञेयं समन्तादर्धयोजनम् ॥
एतदाश्रित्य देवाश्च ऋषयश्च समागताः ।
सेवन्ति मुक्तिकामाश्च गन्धर्वाप्सरसः स्थिताः ॥
यदा सूर्यस्य ग्रहणं कालेन भविता क्वचित् ।
सन्निहत्य तदा स्नात्वा पूताः स्वर्गं गमिष्यथ ॥
ये तु सिद्धा महात्मानस्ते लिङ्गस्पर्शनेन च ।
व्रजन्ति परमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥
एवं ज्ञात्वा ततो गङ्गा देवानां हितकाम्यया ।
उपर्युपरि लिङ्गानि सप्त तत्र चकार ह ॥
ततो ये मुक्तिकामाश्च सिद्धा यज्ञपरायणाः ।
संसेव्य ते प्रयत्नेन प्रयाताः परमं पदम् ॥
पांसवोऽपि [4]कुरुक्षेत्रे वायुना समुदीरिताः ।
अतिदुष्कृतकर्माणं नयन्ति परमां गतिम् ॥
ततोऽहं ताः प्रजा दृष्ट्वा पिहितास्तेन तेजसा ।
क्रोधेन महता युक्तो लिङ्गमुत्पाट्य चाऽक्षिपम् ॥

1. P and B कन्या
2. P and B यावदोघवती
3. B. पञ्चमानं
4. P. कुरुक्षेत्रात्

[1]संक्षिप्तः सरसोमध्ये ऊर्ध्वमेव [2]पुनः स्थितः ।
तदा प्रभृति लोकेषु स्थाणुरित्येव[3] विश्रुतः ॥
सकृद्दर्शनमात्रेण विमुक्तः सर्वकिल्बिषैः ।
प्रयाति मोक्षं परमं यस्मान्नाऽऽवर्तते पुनः ॥
यश्चेह तीर्थे निवसेत् कृष्णाष्टम्यां समाहितः ।
स मुक्तः पातकैः सर्वैरगम्यागमनोद्भवैः ॥

महाभारते—

[4]ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम्[5] ।
पापेभ्यो विप्रमुच्यन्ते तद्गताः सर्वजन्तवः ॥
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात् सोऽपि पापात् प्रमुच्यते ॥
तत्र वै संवसेद्धीरः सरस्वत्यां युधिष्ठिर ।
यत्र ब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥
गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते ।
ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ॥
मनसाऽप्यभिकामस्य[6] कुरुक्षेत्रं युधिष्ठिर ।
पापानि च विनश्यन्ति स्वर्गलोकं स गच्छति ॥
गत्वाऽपि श्रद्धया युक्तः कुरुक्षेत्रं कुरूद्वह ।
फलं प्राप्नोति च तदा राजसूयाश्वमेधयोः ॥

1. P and B, आक्षिप्तः
2. P. परः
3. P and B, एषः
4. वन, ८१, १-६
5. B. अभिश्रितम्
6. B. कामाश्च

तथा—

[1]ततो गच्छेच्च धर्मज्ञ तीर्थं सन्निहतीमपि ।
यत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
मासि मासि समेष्यन्ति पुण्येन महताऽन्विताः ॥
सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
अश्वमेधशतं तत्र तेनेष्टं शाश्वतं भवेत् ॥
पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि च ।
[2]नद्यो नदास्तडागाश्च सर्वप्रस्रवणानि च ॥
उदपानाश्च विप्राश्च पुण्यप्रयतनानि[3] च ।
स्नातमात्रस्य तत्सर्वं नश्यते नाऽत्र संशयः ॥
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ।
अभिपद्य ततो मोक्षं द्वारपालमनन्तकम्[4] ॥
कोटीकूपमुपस्पृश्य लभेद्बहुसुवर्णकम् ।
गङ्गाहृदश्च तत्रैव तीर्थं भरतसत्तम ॥
तत्र स्नायीत धर्मज्ञो ब्रह्मचारी समाहितः ।
राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः ॥
पृथिव्यां नैमिशं पुण्यमन्तरिक्षे च पुष्करम् ।
त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ॥
पांसवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः ।
अतिदुष्कृतकर्माणं नयन्ति परमां गतिम् ॥
उत्तरेण दृषद्वत्यां दक्षिणेन सरस्वतीम् ।

1. वन, ८१, १९०-२०४
2. P alone supplies this line
3. P and B पुण्यान्यायतनानि
4. P and B द्वारपालमरन्तकम्

ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ।
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ॥
[1]अथैकां वाचमुत्सृज्य स्वर्गलोके महीयते ।
[2]ब्रह्मवेदिः कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम् ॥
तत्राऽऽवसन्ति ये राजन्न ते शोच्याः कथंचन ।
[3]तद्रन्तुकारन्तुकयोर्यदन्तरं
रामह्रदानां च मचक्रुकस्य ।
एतत् कुरुक्षेत्रसमन्तपञ्चकं
[4]पितामहस्योत्तरवेदिरुच्यते ॥

॥ इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे कुरुक्षेत्रमाहात्म्यं
समाप्तम्[5] ॥

1. P. अप्येकां
2. B has a gap in this line
3. Udaipur Ms. begins, उवर्णकावर्णकयोः
4. वी. मि. ती. p. 458 प्रजापतेः for पितामहस्य
5. B. कुरुक्षेत्रमाहात्म्यपरिच्छेदः

॥ ७ ॥

## ॥ [1]अथ पृथूदकमाहात्म्यम् ॥

तत्र महाभारते—

[2]ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।
पृथूदकमिति ख्यातं कार्त्तिकेयस्य धीमतः ॥
तत्राऽभिषेकं कुर्वीत पितृदेवार्चने रतः ।
अज्ञानाज्ज्ञानतो वाऽपि स्त्रिया वा पुरुषेण वा ॥
यत् किञ्चिदशुभं कर्म कृतं मानुषबुद्धिना ।
तत्सर्वं नश्यते राजन् स्नातमात्रस्य कौरव ॥
अश्वमेधफलं चाऽस्य स्वर्गलोकं च गच्छति ।
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात् सरस्वती ॥
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् ।
[3]श्रुतं मे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ॥
पृथूदके जप्यपरो नैनं श्वोमरणं तपेत् ।

श्वोभाव्यपि मरणं नैनं सन्तापयेदित्यर्थः[4] ॥

गीतं सनत्कुमारेण व्यासेन च महात्मना ।
वेदे च नियतं राजन्नभिगच्छेत्[5] पृथूदकम् ॥

1. Cf. वी. मि. ती pp. ४७५-६
2. वन, ८१, १४१-१४९
3. P and वी. मि. ती. p. 476 read उत्तमे for श्रुतं मे ; B. उत्तमः
4. Prose explanation reproduced by वी. मि. ती. p. 476
5. वी. मि. ती. p. 476 has wrongly नपि गच्छेत्

पृथूदकात् पुण्यतमं नाऽन्यत्तीर्थं नराधिप ।
एतन्मेध्यं पवित्रं च पावनं च न संशयः ॥
तत्र स्नात्वा दिवं यान्ति येऽपि पापकृतो जनाः ।
पृथूदके नरश्रेष्ठ प्राहुरेवं मनीषिणः ॥

॥ [1]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे पृथूदकमाहात्म्यं
समाप्तम् ॥

1. Omitted by P.

## ॥ ८ ॥

## ॥ [1]अथ पुष्करमाहात्म्यम् ॥

तत्र महाभारते—

[2]त्रिलोके देवलोकस्य तीर्थं त्रैलोक्यविश्रुतम् ।
पुष्करं नाम विख्यातं महाभागः समाविशेत् ॥
दशकोटिसहस्राणां तीर्थानां वै महीपते ।
सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन ॥
आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः ।
गन्धर्वाप्सरसश्चैव नित्यं सन्निहिता विभो ॥
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा ।
दिव्यभोगा महाराज पुण्येन महताऽन्विताः[3] ॥
मनसाऽप्यभिकामस्य पुष्कराणि मनस्विनः ।
पूयन्ते सर्वपापानि नाकपृष्ठे च पूज्यते ॥
तस्मिंस्तीर्थे महाराज नित्यमेव पितामहः ।
उवास परमप्रीतो देवदानवसम्मतः[4] ॥
पुष्करेषु महाभाग देवाः सर्षिगणाः पुरा ।
सिद्धिं समभिसंप्राप्ताः पुण्येन महताऽन्विताः ॥

1. वी. मि. ती. pp. ४८३-४८५
2. वन, ८०, २०-३९
3. *Ibid.* p. ४८३, महता वृताः
4. B. सम्मितः

तत्राऽभिषेकं यः कुर्यात् पितृदेवार्चने रतः ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥
अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः ।
तेनाऽसौ कर्मणाऽभीक्ष्णं प्रेत्य चेह च मोदते ॥
[1]शाकैर्मूलफलैर्वाऽपि येन वर्तयते स्वयम् ।
तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः ॥
तेनैव प्राप्नुयात् प्राज्ञो हयमेधफलं नरः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा राजसत्तम ॥
[2]न वियोनिं व्रजेत् प्रेत्य स्नात्वा तीर्थे महात्मनः ।
कार्त्तिक्यां तु विशेषेण योऽभिगच्छेत पुष्करम् ॥
प्राप्नुयात् स नरो लोकान् ब्रह्मणः सदनेऽक्षयान्[3] ।
सायं प्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः ॥
उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत ।
जन्मप्रभृति यत् पापं स्त्रियो वा पुरुषस्य वा ॥
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति ।
यथा सुराणां सर्वेषामादिस्तु मधुसूदनः ॥
[4]तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते ।
उषित्वा दश वर्षाणि पुष्करे नियतः शुचिः ॥
क्रतून् सर्वानवाप्नोति ब्रह्मलोकं च गच्छति ।
यस्तु वर्षशतं पूर्णमग्निहोत्रमुपाचरेत् ॥

1. B. शाकमूलफलैः
2. P and B, and वी. मि. ती. p. 484 read—
न वियोनिं विशन्त्येते स्नातास्तीर्थे महात्मनः ।
3. B. ब्राह्मणः सदनेच्छया
4. Lacuna of four lines in P and B from here

कार्त्तिकीं वा वसेदेकां पुष्करे सममेव तत् ।
दुष्करं पुष्करे स्नानं दुष्करं पुष्करे तपः ॥
दुष्करं पुष्करे यानं वस्तुं चैव च[1] दुष्करम् ।

पद्मपुराणे—

[2]ऋषिकोटिः समायाता दक्षिणापथवासिनाम् ।
स्नानार्थं पुष्करे राजन् पुष्करं भुवि यद्गतम् ॥
अथ ते मुनयः सर्वे प्राणायामपरायणाः ।
ध्यायन्तश्च परं ब्रह्म स्थिता द्वादश वत्सरान् ॥
ब्रह्मा महर्षयस्तत्र देवाश्चेन्द्रपुरोगमाः ।
ऋषींस्तान् वारयामासुर्नियमात्ते सुदुष्करात् ॥
कारणेन वियद्यानं मन्त्रेणाऽऽह्वयत द्विजाः ।
"आपो हि ष्ठेति" तिसृभिः ऋग्भिः सान्निध्यमेष्यति ॥
"अघमर्षण"जप्येन जायते फलदायकम् ।
[3]विप्रैर्वाक्यावसाने तु सर्वैस्तैस्तु तथाकृतम् ॥
कृतेन पुण्यतां प्राप्ता जातिदोषादृते[4] द्विजाः ।
गर्हिता धर्मशास्त्रेषु ये विप्रा दक्षिणोत्तराः ॥
ये चाऽन्ये पार्वतीयाश्च श्राद्धे नाऽर्हन्ति केतनम् ।
एतस्मात् कारणाद्यानं वियत्येव चिरं[5] स्थितम् ॥

1. P and B सुदुष्करम्

2. ५ खं, २७ अ, ६१—७८ (Ānandāśrama, edn.) It furnishes valiants, but *Vīramitrodaya* follows the *Kalpataru* closely

3. P. विप्रैर्वाक्यानुसारेण; but वी. मि. ती. p. 485 confirms the text

4. P and B, and वी. मि. ती. P. 485 read—जातिदोषात्तु ते द्विजाः

5. P and B, and वी. मि. ती. P. 485 स्थिरं

कार्त्तिक्यां पुष्करे स्नातुं स्वयमेवाऽभिगच्छति ।
ब्रह्मणा सहितं राजन् सर्वेषां पुण्यदायकम् ॥
तत्राऽऽगच्छन्ति ये वर्णाः सर्वे ते पुण्यभाजनाः ।
द्विजैस्तुल्या न सन्देहो विना मन्त्रेण ते नृप ॥
अन्तरीक्षादवातीर्णं तीर्थं पैतामहे शुभम्[1] ।
स्नानं येऽत्र करिष्यन्ति तेषां लोका महोदयाः ॥
निस्पृहं तेऽन्यपुण्यस्य कृतस्याऽप्यकृतस्य च ।
करिष्यन्ति महाराज सत्यमेतदुदाहृतम् ॥
तीर्थानां परमं तीर्थं पृथिव्यामिह पठ्यते ।
नाऽस्मात् परतरं तीर्थं[2] लोकेऽस्मिन् परिपठ्यते ॥

यमः—

कार्त्तिकीं पुष्करे स्नातः सर्वपापैः प्रमुच्यते ।

[3]विष्णुः—

पुष्करे ह्यक्षयं श्राद्धं जपहोमतपांसि च ॥
पुष्करे स्नातमात्रस्तु सर्वपापैः प्रमुच्यते ।

॥ इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे पुष्करमाहात्म्यं[4]
समाप्तम् ॥

1. B. वरम् for शुभम्
2. P and B, वी. मि. ती. P. 485 read पुण्यं for तीर्थं
3. Omitted by B.
4. The whole of this section is reproduced verbatim by वी. मि. ती.

|| १ ||

## || अथ मथुरामाहात्म्यम् ||

तत्र वराहपुराणे—

वराह उवाच—

[1]मथुरेति च विख्यातं मुक्तिक्षेत्रं परं मम ।
भविष्यति वरारोहे द्वापरे युगसंस्थिते ॥
[2]सुरम्या च प्रशस्ता च जन्मभूमिर्मम प्रिया ।
मूर्तीश्चतस्र आदाय उत्पत्स्यामि वरानने ॥

[3]'मूर्तीः' कृष्णबलभद्राऽनिरुद्धप्रद्युम्नस्वरूपाः ॥

तत्र गुह्यानि मे भद्रे भविष्यन्ति प्रियाणि वै ।
पुण्यानि च प्रशस्तानि नृणां संसारमोक्षिणाम् ॥

'गुह्यानि' स्थानानि वक्ष्यमाणानि ॥

तत्राऽहं घातयिष्यामि दानवांश्च वरानने ।
नदी तत्र वरारोहे शुभा पुण्यतरोदका ॥
विवस्वतः सुता रम्या यमुना वै भविष्यति ।
सा प्रयागे तु सुश्रोणि ब्रह्मक्षेत्रे तथा[4] शुभा ॥
भविष्यति न सन्देहो गङ्गायास्तदनन्तरम् ।

1. १५२-१०
2. वी. मि. ती. p. 502
3. वी. मि. reproduces the explanation
4. P and B, and वी. मि. ती. p. 503. read यथा for तथा

[1]'सा प्रयागे त्वि'ति । 'तदनन्तरं' मथुराया अनन्तरम् 'प्रयागे' ब्रह्मक्षेत्रे गङ्गायाः संबन्धाद्यथा यमुना शुभा भविष्यति, तथाऽत्र प्रथममेव मथुरायां शुभा भविष्यतीत्यर्थः ॥

लभन्ते मनुजाः सिद्धिमात्मकर्मसु भाविताः ।
मम क्षेत्रप्रभावेण[2] भूमि संसारमोक्षणम् ॥
[3]असिकुण्डं परं नाम सुरम्यं यमुनाम्भसि ।
कूले च दक्षिणे तत्र मथुरायां सुमध्यमे ॥
तत्र स्नानं प्रकुर्वीत षष्ठकालोषितो नरः ।
नन्दनं वनमाश्रित्य कृतकृत्यः स मोदते ॥
[4]अथाऽत्र मुञ्चति प्राणांस्तस्मिन् कूले तटे शुभे ।
नन्दनं वनमुत्सृज्य मम लोकं प्रपद्यते ॥
अस्ति वृन्दावनं नाम तस्मिन् क्षेत्रे परं मम ।
तत्राऽहं क्रीडयिष्यामि गोभिर्गोपालकैः सह ॥
तत्र कुण्डं महाभागे लतागुल्मशतावृतम् ।
तत्र स्नानं प्रकुर्वीत चतुःकालोषितो नरः ॥
मोदते विपुले दिव्ये गन्धर्वाणां कुलेषु च ।
तत्र यो मुञ्चति प्राणान् सततं कृतनिश्चयः ॥
गन्धर्वपुरमुत्सृज्य मम लोकं स गच्छति ।
तत्र भाण्डीरकं नाम गुह्यं क्षेत्रं परं मम ॥
देवा अपि न जानन्ति नागा यक्षा महासुराः ।
तत्र स्नानं प्रकुर्वीत एकभक्तोषितो नरः ॥

1. P and B, and वी. मि. ती. p. 503 reproduces the comment also
2. वी. मि. ती. p. 503. प्रभावोऽसौ
3. P and B, अग्निकुण्डं
4. P and B, तथाऽत्र

मोदते नागलोकेषु एवमेतन्न संशयः ।
अथाऽत्र मुञ्चति प्राणान् कृत्वा कर्म सुदुष्करम् ॥
नागलोकं समुत्सृज्य मम लोकं प्रपद्यते ।
तत्र कुण्डं महाभागे द्रुमगुल्मलतावृतम् ॥
तत्र पूर्वेण पार्श्वेण तस्मिंस्तीर्थं सुधार्मिकम् ।

'धार्मिकं' धर्मप्रयोजनं धर्मोत्पादकमित्यर्थः ॥

चम्पकैः पाटलैश्चैव नानापुष्पैश्च शोभितम् ।
तत्र स्नानं तु कुर्वीत अहोरात्रोषितो नरः ॥
लोकं वैद्याधरं गत्वा मोदते कृतनिश्चयः ।
अथाऽत्र मुञ्चति प्राणान् मल्लोकं प्रतिपद्यते ॥
यमलार्जुनकुण्डेति क्षेत्रं [1]कुण्डं परं मम ।
[2]तच्च कुण्डं महाभागे वृक्षगुल्मलतावृतम् ॥
तत्र स्नानं तु कुर्वीत अहोरात्रोषितो नरः ।
अप्सरोभवनं गत्वा मोदते गतकिल्विषः ॥
[3]अथाऽत्र मुञ्चति प्राणान् कृत्वा कर्म सुनिश्चयः ।
अप्सरोभवनं गत्वा मल्लोकं प्रतिपद्यते ॥
[4]तथैवाऽर्कस्थलं नाम तस्मिन् क्षेत्रे परं मम ।
दृश्यते [5]तत्र चाऽऽदित्यो द्वादशात्मा व्यवस्थितः ॥
कूपस्तत्र महाभागे प्रसन्नसलिलोदकः ।
दुर्लभः पापकार्याणां सुलभः [6]पुण्यकारिणाम् ॥

1. P and B, गुह्यं
2. B. तत्र
3. P and B omit this line
4. P. तस्यैव
5. P. यत्र
6. P and B, शुभकारिणाम्

अथाऽत्र स्नानं कुर्वीत एकरात्रोषितो नरः ।
मोदते सूर्यलोकेषु[1] एवमेतन्न संशयः ॥
अथाऽत्र मुञ्चति प्राणान् कृत्वा चेन्द्रियनिग्रहम् ।
सूर्यलोकं परित्यज्य मम लोकं स[2] गच्छति ॥
तत्र वीरस्थलं[3] नाम ज्येष्ठं गुह्यं परं[4] मम ।
गुल्मवल्लीलताकीर्णं बहुपुष्पफलोदकम् ॥
स्नानं तत्रैव कुर्वीत पञ्चरात्रोषितो नरः ।
ममैव स प्रसादेन वीरलोकेषु मोदते ॥
[5]अथाऽत्र मुञ्चति प्राणानेकचित्तो दृढव्रतः ।
वीरलोकं समुत्सृज्य मम लोकं प्रपद्यते ॥
अपरं कनकं नाम गुह्यक्षेत्रं परं मम ।
विन्ध्यपृष्ठे महाभागे कूपस्तत्र विधीयते ॥
तत्र स्नानं प्रकुर्वीत एकभक्तोषितो नरः ।
मोदते नाकपृष्ठे स कृतकृत्यो न संशयः ॥
अथाऽत्र मुञ्चति प्राणान् याति दिव्यां परां गतिम् ।
नाम्ना प्रकीर्तनं नाम गुह्यक्षेत्रं परं मम ॥
तत्र चैकं शिलापट्टं रक्तचन्दनसन्निभम् ।
मनोज्ञं रमणीयं च मम भक्तसुखावहम् ॥
यस्तत्र तिष्ठते भूमिमेकरात्रोषितो नरः ।
स वायुभवनं गत्वा मोदते कृतनिश्चयः ॥

1. B. सूर्यलोके सः
2. P and B च
3. B. नीरस्थलम्
4. P. गुह्यतरं
5. P and B omit seven lines from here and telescope the first half of this line with the latter half of the seventh

अथाऽत्र मुञ्चति प्राणान् याति लोकं ममाऽक्षयम् ।
सोमकुण्डेति विख्यातं तस्मिन् क्षेत्रे परं मम ॥
[1]तत्र स्नानं तु कुर्वीत सोमलोके स मोदते ।
अथाऽत्र मुञ्चति प्राणान् लोभमोहविवर्जितः ॥
सोमलोकं समुत्सृज्य मोदते मां च पश्यति ।
राधाकुण्डेति विख्यातं तस्मिन् क्षेत्रे परं मम ॥
तत्र स्नानं तु कुर्वीत एकरात्रोषितो नरः ।
ततः पिण्डारकं नाम क्षेत्रं गुह्यं परं मम ॥
[2]स्नाने दक्षिणकूले तु शुद्धे तु यमुनाम्भसि ।
तत्राऽभिषेकं कुर्वीत एकरात्रोषितो नरः ॥
याति पुण्यकृतां लोकं मेरुशृङ्गसमाश्रितम् ।
जम्बीरं चम्पकं नाम तस्मिन् क्षेत्रे परं मम ॥
तत्र कुण्डं विशालाक्षि प्रसन्नं विमलोदकम् ।
तत्र स्नानं प्रकुर्वीत एकरात्रोषितो नरः ॥
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ।
कर्मावरोहणं नाम तस्मिन् क्षेत्रे परं मम ॥
[3]तत्राऽभिषेकं कुर्वीत विन्ध्यप्रमुखतः शुभे ।
नाम्ना [4]वितानकं क्षेत्रं तत्र गुह्यं परं मम ॥
मथुरापश्चिमे भागे अदूरादर्धयोजनात् ।
ततो बल्लभकं[5] नाम क्षेत्रं गुह्यं परं मम ।

1. Four lines from this one are crossed out in red ink in the Bhonsle manuscript
2. P. स्थाने
3. B omits this line and the next
4. P. चेटनकं
5. B. वल्लणम्

अथाऽत्र मुञ्चति प्राणांस्तीर्थे बल्लभके[1] मम ॥
स्वर्गलोकं परित्यज्य मम लोके महीयते ।
[2]ऋषभञ्जनकं नाम तस्मिन् गुह्यं परं मम ॥
यत्र धारा पतत्येका विन्ध्यकूटाद्रिनिस्सृता ।
तत्राऽभिषेकं कुर्वीत एकरात्रोषितो नरः ॥
[3]अथाऽत्र मुञ्चति प्राणान् शीघ्रं याति परां गतिम् ।
[4]अस्ति बिन्दुप्रभं नाम तस्मिन् गुह्यं परं मम ॥
बिन्दुरेकः पतत्यत्र पर्वताद्दुरतिक्रमात् ।
तत्राऽभिषेकं कुर्वीत एकरात्रोषितो नरः ॥
अथाऽत्र मुञ्चति प्राणान् शीघ्रं याति परां गतिम् ।
अस्ति [5]अस्तमनं नाम तस्मिन् गुह्यं परं मम ॥
धाराऽत्र पतते चैका विन्ध्यपर्वतनिःसृता ।
तत्राऽभिषेकं कुर्वीत उपस्पृश्य यथाविधि ॥
[6]अस्ति ताम्रप्रभं नाम तस्य क्षेत्रस्य दक्षिणे ।
अथ दूरात् पञ्चक्रोशात् तत्र कुण्डं परं महत् ॥
तत्राऽभिषेकं कुर्वीत चतुःकालसमन्वितः ।
वत्सप्रक्रीडनं नाम तस्मिन् गुह्यं परं मम ।

1. B. वल्लणके
2. B. ऋषभञ्जनकम्
3. P omits this line
4. B. अहिबिन्दु
5. P and B, मस्तमनं
6. P and B supply these three lines

मथुरापश्चिमे पार्श्वे अदूरादर्धयोजनात् ॥
तत्र कुण्डं महाभागे प्रसन्नविमलोदकम् ।
तत्राऽभिषेकं कुर्वीत अहोरात्रोषितो[1] नरः ॥
[2]अग्नेः स भवनं गत्वा मोदते विगतज्वरः ।
अथाऽत्र मुञ्चति प्राणान् सिद्धिं याति परां गतिम् ॥
अस्ति गोवर्धनं नाम क्षेत्रं गुह्यं परं मम ।
अदूरादष्टकोशानि मथुरायाश्च पश्चिमे ॥
ह्रदं तत्र महाभागे द्रुमगुल्मलतावृतम् ।
ऐन्द्रं पूर्वेण पार्श्वेन याम्यां वै दक्षिणे नवम् ॥
वारुणे पश्चिमे तीर्थं कौबेरं चोत्तरेण तु ।
तत्र मध्ये स्थितो भद्रे क्रीडितोऽयं यदृच्छया ॥
संस्तुतोऽहं लोकपालैः स्तुतिभिर्मन्त्रवादिभिः ।
तत्राऽपि महदाश्चर्यं पश्यन्ति मम चेतसः ॥
तस्मिन् गोवर्धने भूमिः सर्वभागवतप्रिये ।
चतुर्विंशति द्वादश्यां तस्मिन् शिखरमूर्धनि ॥
दृश्यते स्थूलदीपा वै द्योतयन्ती दिशो दश ।
यश्च ते पश्यते दीपं मम कर्मपरायणः ॥
लभते परमां सिद्धिमेवमेतन्न संशयः ।
कालियस्य ह्रदं पुण्यमस्ति गुह्यं परं मम ॥
तत्र कंसं हनिष्यामि संस्थिते द्वापरे युगे ।
तत्र स्नानं तु कुर्वीत पञ्चरात्रोषितो नरः ॥
गन्धर्वभवनं गत्वा मोदते विगतज्वरः ।
तत्र तिष्ठाम्यहं भद्रे दिशं पूर्वां समाश्रितः ॥

1. B. षष्टिकालोषितो
2. P and B omit thirty-two lines from here

हिरण्यप्रतिमां कृत्वा बृहद्रूपश्चतुर्भुजः ।
दक्षिणे गच्छतः पार्श्वे कूपोऽत्र विमलोदकः ॥
सप्तसामुद्रकं नाम यत्र सन्तिष्ठते जलम् ।
तत्राऽभिषेकं कुर्वीत चतुःकालोषितो नरः ॥
मोदते सप्तद्वीपेषु स्वच्छन्दगमनालयः ।
अथाऽत्र मुञ्चति प्राणान् मम लोके स मोदते ॥
विंशद्योजनविस्तारे माथुरे मम मण्डले ।
तत्र प्राणान् प्रमुञ्चन्ति सिद्धा यान्ति परां गतिम् ॥
अस्ति नन्दिगुहा नाम तस्मिन् गुह्यं परं मम ।
मुचुकुन्दः स्वपित्यत्र दानवासुरशातनः ॥
तत्र कुण्डं महाभागे प्रसन्नविमलोदकम् ।
[1]तत्राऽभिषेकं कुर्वीत षष्ठकालोषितो नरः ॥
दशवर्षसहस्रेषु मोदते कृतनिश्चयः ।
ये चरन्ति महाभागे माथुरादवने(?) जनाः ॥
तेऽपि यान्ति परां सिद्धिं मत्प्रसादान्न संशयः ।
एतत्ते कथितं भद्रे माहात्म्यं मथुरागतम् ॥
एतन्मरणकालेऽपि स्मर्तव्यं मनसाऽपि च ।
यदीच्छेत् परमां सिद्धिं सर्वसंसारमोक्षणीम् ॥

विष्णुपुराणे—

[2]यमुनासलिले स्नात्वा पुरुषो मुनिसत्तम ।
ज्येष्ठे मास्यमले पक्षे द्वादश्यामुपवासकृत् ॥

1. Lacuna in P ends here
2. ६, ८, ३३-३८

समभ्यर्च्याऽच्युतं सम्यङ्मथुरायां समाहितः ।
अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम् ॥
[1]आलोक्यर्द्धिमथाऽन्येषामुदितानां स्ववंशजैः ।
एतत्किलोचुरन्येषां पितरः सपितामहाः ॥
कश्चिदस्मत्कुले जातः कालिन्दीसलिले प्लुतः ।
अर्चयिष्यति गोविन्दं मथुरायामुपोषितः ॥
ज्येष्ठमूला[2] सिते पक्षे समभ्यर्च्य जनार्दनम् ।
परां सिद्धिमवाप्स्यामस्तारिताः स्वकुलोद्भवैः ॥
धन्यानां कुलजः पिण्डं यमुनायां प्रदास्यति ।
तस्मिन् काले समभ्यर्च्य तत्र कृष्णं समाहितः ॥
इति कल्पतरौ तीर्थकाण्डे मथुरामाहात्म्यम् ।

॥ [3]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे मथुरामाहात्म्यं
समाप्तम् ॥

1. P and B omit three lines from here
2. B. ज्येष्ठमास्यसिते
3. So P, Udaipur and B give a short colophon comprising only the last four words

## ॥ [1]अथ उज्जयिनीमाहात्म्यम् ॥

तत्र ब्रह्मपुराणे—

दक्षिणस्यां दिशि महत् क्षेत्रमुज्जयिनीति च ।
तत्र लिङ्गं महाकालं दर्शनात् सर्वपापजित् ॥
तपस्वी परमां सिद्धिं यत्र प्राप्नोति कामिकीम् ।

तथा—

रुद्र उवाच—

अवन्त्यां तु यदा स्कन्दो मया पूर्वं तु भद्रितः ।
[2]चूडाकर्मनिवृत्ते तु कुमारस्य तदा शुभे ॥
आगत्य मातरो भोज्यमपूर्वं तूपयाचिरे[3] ।
देवलोकाद्देवगणो मातॄणां भोक्तुमागतः ॥
एवमुक्तस्तदा ताभिर्देवदेवो महेश्वरः ।
धर्मार्थं तास्तदा प्रोक्ताः पार्वत्या देवसन्निधौ ॥
मया वै साधितं चाऽन्नं प्रकारैर्बहुभिः कृतम् ।
तत् सर्वं च व्ययीभूतं न चाऽन्यदिह दृश्यते ॥
आगतासु भवन्तीषु किं देयं वै मया भवेत् ।

1. वी. मि. ती. pp. 529-531 appropriates the entire section
2. P and B, चूडाकर्मणि वृत्ते
3. P and B, तु ययाचिरे

अपूर्वं भवतीनां च मया देयं विशेषतः ॥
आस्वादितं न चाऽन्यैस्तु भक्ष्यं ते[1] च ददाम्यहम् ।
अधोभागे च यौ नाभेर्वर्तुलौ फलसन्निभौ ॥
भक्षयध्वं हि सहिता लम्बौ मे वृषणावुभौ[2] ।
अनेन चाऽप्यभोजेन परा तृप्तिर्भविष्यति ।
महाप्रसादं ताः कृत्वा देव्यः सर्वाश्च वै शुभे ॥
प्रणिपत्य गताः सर्वा इदं वचनमब्रुवन् ।
करिष्यन्ति शुभाचारा विना हास्येन ये च तत् ॥
[3]तेषां नूनं पशुः पुत्रा दाराश्चैव गृहादिकम् ।
भविष्यति मया दत्तं यच्चाऽन्यन्मनसेप्सितम् ॥
हास्येन दीर्घरोगित्वं दारिद्र्यं चाऽपि निन्दितम् ।
तस्मान्न निन्दा हास्ये च कर्तव्यं च विजानता ॥
[4]येनाऽऽख्या मातरः ख्यातास्ततो लोके भविष्यति ।
उपयाचितं नरा ये तु कारयिष्यन्ति कौमुदे ॥
[5]चणकाः पूरिकाश्चैव वृषणैः सह पूरिकाः ।
बन्धुभिः स्वजनैश्चैव तेषां वंशो न भिद्यते ॥
अपुत्रो लभते पुत्रं धनार्थी लभते धनम् ।
रूपवान् सुभगो भोगी सर्वशास्त्रविशारदः ॥
हंसयुक्तेन यानेन ब्रह्मलोके महीयते ।

1. P and B, भक्षार्थे
2. B. इमौ
3. Three lines beginning with this are omitted by B
4. P and B, ऐलाख्या
5. P and B omit the second half of this line and the second half of the next, and unite the two fragments

मत्स्यपुराणे—

प्रयागे वा भवेन्मोक्षो महाकालेऽथवा प्रिये ।
अमरकण्टके तद्वत्तथा कायावरोहणे ॥
कालञ्जरे महाकाले इह वा मत्परिग्रहे[1] ।
यद्वन्मुखे स्थिते नेत्रे तद्वत्तीर्थे इमे भुवः ॥
महाकालोऽविमुक्तश्च गङ्गया सिप्रयाऽन्वितौ ।

॥ इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे उज्जयिनीमाहात्म्यं[2]
समाप्तम् ॥

1. B मत्परिग्रहात्
2. Colophon as in P

॥ ११ ॥

## ॥ [1]अथ नर्मदामाहात्म्यम् ॥

[2]तत्र मत्स्यपुराणे—

युधिष्ठिरं प्रति, मार्कण्डेय उवाच—

[3]नर्मदा सरितां श्रेष्ठा सर्वपापप्रणाशिनी ।
तारयेत् सर्वभूतानि स्थावराणि चराणि च ॥

तथा[4]—

[5]पुण्या कनखले गङ्गा कुरुक्षेत्रे सरस्वती ।
ग्रामे वा यदि वाऽरण्ये पुण्या सर्वत्र नर्मदा ॥
त्रिभिः सारस्वतं तोयं सप्ताहेन तु यामुनम् ।
सद्यः पुनाति गाङ्गेयं दर्शनादेव नार्मदम्[6] ॥
कालिङ्गदेशपश्चार्धे पर्वतेऽमरकण्टके ।
पुण्या च त्रिषु लोकेषु माननीया[7] मनोरमा ॥

1. वी. मि. ती. pp 379-282

2. वी. मि. ती. p. 379 cites these verses from कौर्मे, but they are found in म. पु. ch. 186, pp. 408-9, though the presence of extra verses in वी. मि. suggests कौर्म and मात्स्य

3. १८६, ८

4. A verse is omitted here having common passages

5. १८६, १०-५५

6. P and B, नर्मदा

7. P and B as well as वी. मि. ती. p. 380 and म. पु. read रमणीया

तत्र स्नात्वा नरो राजन्नियमस्थो जितेन्द्रियः ।
उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥
जलेश्वरे नरः स्नात्वा पिण्डान्[1] दत्त्वा यथाविधि ।
पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम् ॥
[2]पर्वतस्य समन्तात्तु रुद्रकोटिः प्रतिष्ठिता ।
स्नानं यः कुरुते तत्र गन्धमाल्यानुलेपनैः ॥
प्रीता चाऽस्य भवेत् सर्वा रुद्रकोटिर्न संशयः ।
पर्वतस्याऽपरे भागे स्वयं देवो महेश्वरः ॥
तत्र स्नात्वा शुचिर्भूत्वा ब्रह्मचारी जितेन्द्रियः ।
पितृकार्यं च कुर्वीत विधिदृष्टेन कर्मणा ॥
तिलोदकेन तत्रैव सन्तर्प्य पितृदेवताः ।
आसप्तमं कुलं तस्य स्वर्गे मोदति पाण्डव ॥
षष्टिवर्षसहस्राणि स्वर्गलोके महीयते ।
ततः स्वर्गात् परिभ्रष्टो जायते विपुले कुले ॥
धनवान् दानशीलश्च धार्मिकश्चैव जायते ।
पुनः स्मरति तत्तीर्थं गमनं तत्र वाञ्छति[3] ॥
तारयित्वा कुलान् सप्त रुद्रलोकं स गच्छति ।
[4]योजनानां शतं साग्रं श्रूयते सरिदुत्तमा ॥
विस्तरेण तु राजेन्द्र योजनद्वयमायता[5] ।
षष्टितीर्थसहस्राणि षष्टिकोट्यस्तथैव च ॥

1. P. पिण्डं

2. P and B, सवन्तस्य

3. P and B, तत्र चेच्छति

4. The length of the Narmadā is 800 miles. The text gives it correctly, a *yōjana* being 8 miles

5. P and B, द्वयमायते

पर्वते तत्र सुशुभे तिष्ठत्यमरकण्टके ।
ब्रह्मचारी शुचिर्भूत्वा जितक्रोधो जितेन्द्रियः ॥
सर्वहिंसानिवृत्तस्तु सर्वभूतहिते रतः ।
एवं शुद्धसमाचारो यस्तु प्राणान् परित्यजेत् ॥
तस्य पुण्यफलं राजन् शृणुष्वाऽवहितो मम ।
शतं वर्षसहस्राणां स्वर्गे मोदति पाण्डव ॥
ततः स्वर्गात् परिभ्रष्टो राजा भवति धार्मिकः ।
गृहं तु लभते [1]शौरेर्नानारत्नविभूषितम् ॥
तस्मिन् गृहे वसित्वा तु क्रीडाभोगसमन्विते ।
जीवेद्वर्षशतं साग्रं सर्वरोगविवर्जितः ॥
एवं भोगान् [2]भजन्ते वै मृता येऽमरकण्टके ।
[3]अग्निप्रवेशेऽथ जले तथा चैव अनाशके[4] ॥
[5]अनिवृत्ता गतिस्तस्य पवनस्याऽम्बरे[6] यथा ।
पतनं पतते[7] यस्तु अमरेशे नराधिप ॥
कन्यास्त्रीणि सहस्राणि एकैकस्याऽपि चाऽपरा ।
तिष्ठन्ति भवने तस्य प्रेषणं प्रार्थयन्ति च ॥
दिव्यभोगसुसम्पन्नः क्रीडते कालमक्षयम् ।
पृथिव्यामासमुद्रायामीदृशो नैव [8]जायते ॥

1. P and B, सो वै ; म. पु. p. 409, वै सः
2. P and B, भुञ्जन्तो ; म. पु. p. 409 reads एवं भोगो भवेत्तस्य यो मृतोऽमरकण्टके
3. म. पु. p. 409, अग्नौ विषजले वाऽपि तथा चैव ह्यनाशके
4. B. अनासिके
5. P. अग्निवृत्ता; म. पु. p. 409 अनिवर्त्तिकागतिस्तस्य पवनस्याऽम्बरे तथा।
6. P. अवरे
7. म. पु. p. 409 कुरुते
8. Udaipur Ms. ईदृशोनैव

यादृशोऽयं मृतः श्रेष्ठः पर्वतेऽमरकण्टके ।
तावत्तीर्थं तु विज्ञेयं पर्वतस्य तु पश्चिमे ॥
ह्रदो जलेश्वरो नाम त्रिषु लोकेषु विश्रुतः ।
तत्र पिण्डप्रदानेन सन्ध्योपासनकर्मणा ॥
पितरो दश वर्षाणि तर्पितास्तु भवन्ति ते ।
दक्षिणे नर्मदाकूले कपिलाख्या महानदी ॥
[1]सरलार्जुनसंपन्ना नाऽतिदूरे व्यवस्थिता ।
सा तु पुण्या महाभागा त्रिषु लोकेषु विश्रुता ॥
तत्र कोटिशतं साग्रं तीर्थानां तु युधिष्ठिर ।
पुराणे श्रूयते राजन् शतकोटिगुणं फलम् ॥
तस्मिंस्तीर्थेषु ये वृक्षाः पतिताः कालपर्ययात् ।
नर्मदातोयसंस्पृष्टास्तेऽपि यान्ति परां गतिम्[2] ।
द्वितीया तु महाभागा विशल्यकरणी शुभा ॥
तत्र[3] तीरे नरः स्नात्वा विशल्यो भवति क्षणात् ।
तत्र देवगणाः सर्वे सकिन्नरमहोरगाः ॥
यक्षराक्षसगन्धर्वा ऋषयश्च तपोधनाः ।
सर्वे समागतास्तत्र पर्वतेऽमरकण्टके ॥
तैश्च सर्वैः समागत्य मुनिभिश्च तपोधनैः ।
नर्मदा संश्रिता पुण्या विशल्या नाम नामतः ॥
उत्पादिता महाभागा सर्वपापप्रणाशिनी ।
तत्र स्नात्वा नरो राजन् ब्रह्मचारी जितेन्द्रियः ॥

1. म. पु. p. 409 सकलार्जुनसंच्छन्ना
2. P. ते यान्ति परमां गतिम्
3. P and B, म. पु. p. 409 as well as B read तीर्थे

उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ।
कपिला च विशल्या च श्रूयते राजसत्तम ॥
ईश्वरेण पुरा प्रोक्ता लोकानां हितकाम्यया ।
[[1]सरस्वत्यां च गङ्गायां नर्मदायां युधिष्ठिर ।]
तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् ॥
अनाशकं तु यः कुर्यात्तस्मिंस्तीर्थे नराधिप ।
सर्वपापविशुद्धात्मा रुद्रलोकं स गच्छति ॥
नर्मदायां च राजेन्द्र पुराणे यच्छ्रुतं मया ।
यत्र तत्र नरः स्नात्वा अश्वमेधफलं लभेत् ॥
ये वसन्त्युत्तरे कूले रुद्रलोके वसन्ति ते ।
सरस्वत्यां च गङ्गायां नर्मदायां युधिष्ठिर ॥
समं स्नानं च दानं च यथा मे शङ्करोऽब्रवीत् ।
परित्यजति यः प्राणान् पर्वतेऽमरकण्टके ॥
वर्षकोटिशतं साग्रं रुद्रलोके महीयते ।
नर्मदाया जलं पुण्यं फेनोर्मिसमलङ्कृतम् ॥
पवित्रं शिरसा वन्द्यं सर्वपापैः प्रमुच्यते ।

तथा—

[2]नर्मदा तु नदी श्रेष्ठा पुण्या पुण्यतमा हि सा ।
मुनिभिस्तु महाभागैर्विभक्ता धर्मकाङ्क्षिभिः ॥
यज्ञाः पवित्रमन्त्राणि प्रविभक्तानि पाण्डव ।
तेषां स्नात्वा तु राजेन्द्र सर्वपापैः प्रमुच्यते ॥

1. Supplied by P but missing in म. पु.
2. १८७, १-२

तथा—

[1]नर्मदा सर्वतः पुण्या ब्रह्महत्त्यापहारिणी।
अहोरात्रोपवासेन मुच्यते ब्रह्महत्त्यया॥
एवं पुण्या च रम्या च नर्मदा पाण्डुनन्दन।
त्रयाणामपि लोकानां पुण्या एव महानदी॥
वटेश्वरे महापुण्ये गङ्गाद्वारे तपोधने।
एतेषु सर्वस्थानेषु ये द्विजास्संशितव्रताः॥
श्रुतं दशगुणं पुण्यं नर्मदोदधिसङ्गमे।
[2]चन्द्रसूर्योपरागेषु गच्छेदमरकण्टकम्॥
अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः।
स्वर्गलोकमवाप्नोति दृष्ट्वा तत्र महेश्वरम्॥
सन्निहत्यां गमिष्यामि राहुग्रस्ते दिवाकरे।
तदेव निखिलं[3] पुण्यं पर्वतेऽमरकण्टके॥
मनसा संस्मरेद्यस्तु गिरिं त्वमरकण्टकम्।
चान्द्रायणं शतं साग्रं लभते नाऽत्र संशयः॥
त्रयाणामपि लोकानां विख्यातोऽमरकण्टकः।

तथा—

[4]प्रदक्षिणं तु यः कुर्यात् पर्वतेऽमरकण्टके॥
[5]पुण्डरीकस्य यज्ञस्य फलं प्राप्नोति मानवः।
[6][तत्र ज्वालेश्वरो नाम पर्वतेऽमरकण्टके॥

1. P and B omit seven lines from this, १८६, ५५-५८
2. १८८, ८५-८९
3. P. लिखितं
4. १८८, ९३-९९ B omits this line and the next
5. P omits two lines from this
6. [ ] Two lines are omitted by B

तत्र स्नात्वा दिवं यान्ति येऽमृतास्तेऽपुनर्भवाः ।]
ज्वालेश्वरे महाराज यस्तु प्राणान् परित्यजेत् ॥
चन्द्रसूर्योपरागे तु तस्याऽपि शृणु यत् फलम् ।
अमराणां पतिर्देवः पर्वतेऽमरकण्टके ॥
रुद्रलोकमवाप्नोति यावदाभूतसंप्लवम्[1] ।
अमरेशस्य देवस्य पर्वतस्य उभे तटे ॥
तत्र ता ऋषिकोट्यस्तु तपस्यन्ति हि सुव्रताः ॥
समन्ताद्योजनं क्षेत्रं गिरिश्चाऽमरकण्टकः ।
अकामो वा सकामो वा नर्मदायाः शुभे जले ॥
स्नात्वा मुच्येत पापेभ्यो रुद्रलोकं तु गच्छति ।

तथा—

[2]कावेरीसङ्गमं तत्र सर्वपापप्रणाशनम् ॥
ये नरा नाऽभिजानन्ति वञ्चितास्ते न संशयः ।
[3]तस्मात् सर्वप्रयत्नेन तत्र स्नायीत मानवः ॥
कावेरी च महापुण्या नर्मदा च महानदी ।
तत्र स्नात्वा तु राजेन्द्र अर्चयेद्वृषभध्वजम् ॥
अश्वमेधफलं प्राप्य रुद्रलोके महीयते ॥
अग्निप्रवेशं यः कुर्याद्यश्च कुर्यादनाशनम् ।
अनिवृत्ता गतिस्तस्य यथा मे शङ्करोऽब्रवीत् ॥
सेव्यमानो नरस्त्रीभिः क्रीडते दिवि[4] रुद्रवत् ।

1. P. यावदाहूतसंकुलम् B. यावदाहतसंप्लवम्
2. १८९, १२-१९ Is this the Cauvery of South India?
3. Line omitted by B
4. P and B, भाति

षष्टिवर्षसहस्राणि [1]षष्टिकोटीस्तथाऽपराः ॥
मोदते रुद्रलोकस्थो यत्र यत्रैव गच्छति ।
पुण्यक्षयात् परिभ्रष्टो राजा भवति धार्मिकः ॥
[2]धनवान् दानशीलश्च महत्येव कुले भवेत् ।
[3]तत्र पीत्वा जलं सम्यक् चान्द्रायणफलं लभेत् ॥
स्वर्गं गच्छन्ति ते मर्त्या ये पिबन्ति जलं शुभम् ।
गङ्गायमुनयोः सङ्गे यत्फलं प्राप्नुयान्नरः ॥
कावेरीसङ्गमे स्नातस्तत्फलं तस्य जायते[4] ।

॥ इति [[5]श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते] कृत्यकल्पतरौ
तीर्थकाण्डे नर्मदामाहात्म्यं
समाप्तम् ॥

1. P. षष्टिकोट्यस्तथाऽपराः
2. P and B, भोगवान्
3. P and B omit this line
4. P. देवता
5. P [ ] supplies the words in brackets

## ॥ १२ ॥

## ॥ [1]अथ कुब्जाम्रकमाहात्म्यम् ॥

तत्र वराहपुराणे—

वराह उवाच—

[2]एवं कुब्जाम्रकं ख्यातं तीर्थमेतद्यशस्विनि ।
ये मृतास्तत्र गच्छन्ति ते मल्लोकाय निष्कलाः ॥
[3]तीर्थं कुब्जाम्रकं पुण्यं मम लोकसुखावहम् ।
तीर्थं कुमुदारकं चैव तस्मिन् कुब्जाम्रके स्थितम् ॥
स्नानमात्रेण सुश्रोणि स्वर्गमार्गप्रदं तु तत् ॥
कौमुदस्य तु मासस्य तथा मार्गशिरस्य च ।
वैशाखस्य च मासस्य कृत्वा वै कर्म दुष्करम् ॥
यो वै परित्यजेत् प्राणान् पुमान् स्त्री वा नपुंसकः ।
निष्कलां लभते सिद्धिं मम लोकाय गच्छति ॥
तीर्थं मानस इत्येवं यस्तु तत्राऽभिधीयते ॥
तस्मिन् स्नात्वा विशालाक्षी गच्छते नन्दनं वनम् ।
तत्र यो मुञ्चति प्राणान् कौमुदस्य तु द्वादशीम् ॥
पुष्कलां लभते सिद्धिं मम लोकाय गच्छति ।

1. वी. मि. ती. p. 377 cites only the first verse for this section. Its Ms. was probably defective

2. १२६, १२

3. १२६, २५

[1]मायातीर्थमिति[2] ख्यातं येन मायां विजानते ॥
तस्मिन् कृत्वोदकं ब्रह्मन् मायातीर्थे महायशाः ।
दशवर्षसहस्राणि मद्भक्तो जायते नरः ॥
अथवा म्रियते तत्र मायातीरे यशस्विनि ।
मायायोगी ततो भूत्वा मम लोकाय गच्छति ॥
तीर्थं सर्वपिकं[3] नाम सर्वकर्मगुणान्वितम् ।
यस्तत्र स्नाति वै कश्चिद्वैशाखस्य तु द्वादशीम् ॥
निष्कलं लभते स्वर्गं सहस्रान् दश पञ्च च ।
तीर्थं पूर्वामुखं नाम तत्र केचिन्न जायते ॥
सर्वदा तत्र गङ्गायाः शीतलं जायते जलम् ।
यत्र चोष्णं भवत्यम्बु ज्ञेयं पूर्णमुखं च तत् ॥
स्नात्वा गच्छति सुश्रोणि मम लोकं महायशाः ।
[4]पुनरन्यत् प्रवक्ष्यामि शृणु तत्त्वेन माधवि ॥
अशोकं नाम तत्रैव स्नात्वा शोकं न पश्यति ।
सर्वसङ्गैश्च निर्मुक्तो मम लोकाय गच्छति ॥
तीर्थं च करवीराख्यं मम लोकसुखावहम् ।
तस्य चिह्नं प्रवक्ष्यामि येन विज्ञायते भुवि ॥
पुरुषैर्ज्ञानवद्भिश्च मम भक्तिविनिश्चितैः ।
माघमासस्य सुश्रोणि शुक्लपक्षस्य द्वादशीम् ॥
पुष्यते करवीरं तु मध्याह्ने तु न संशयः ।
तत्राऽथ म्रियते भूमि माघमासे तु द्वादशीम् ॥

1. १२६, ३३
2. P and B, इदं for इति
3. P. सार्पंकं B. सार्थैकम्
4. १२६, ४६

ब्रह्माणं मां च पश्येत[1] तथैव वृषभध्वजम् ।
पुण्डरीकमिति ख्यातं तीर्थं तत्र महद्यशः ॥
स्नात्वा प्राप्नोति सुश्रोणि फलं तत्र महागुणम् ।
पुण्डरीकस्य यज्ञस्य यजमानस्य यत्फलम् ॥
[2]अथवा म्रियते तत्र नष्टत्रासो[3] महातपाः ।
दशानां पुण्डरीकाणां फलं प्राप्नोति मानवः ॥
सिद्धिं च लभते धन्यां मम लोकाय गच्छति ।
अग्नितीर्थे तु वै स्नातस्तस्मिन् कुब्जाम्रके स्थितः ॥
सप्तधाऽग्निप्रवेशेन यत् फलं लभते नरः ।
प्राप्नोति तन्महाभागे स्नातमात्रो न संशयः ॥
अथवा म्रियते तत्र शुक्लामेकां च द्वादशीम् ।
विंशद्रात्रोषितस्तत्र मम लोकाय गच्छति ॥
एषा ते कथिता भूमि व्युष्टिः कुब्जाम्रकस्य च ।

॥ [4]इति श्रीभट्टहृयदधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे कुब्जाम्रकमाहात्म्यं
समाप्तम् ॥

1. B. दृश्येत
2. P omits this line
3. B has लब्धसंज्ञी
4. P and B omit the colophon

## ॥ अथ सूकरमाहात्म्यम् ॥

तत्र वराहपुराणे—

वराह उवाच—

[1]परं कोकामुखं स्थानं स्थानं कुब्जाम्रकं परम् ।
परं च सौकरं स्थानं सर्वसंसारमोक्षणम् ॥
यत्र संस्था मया देवि उद्धृताऽसि रसातलात् ।
तत्र भागीरथी गङ्गा मम शौचार्थमागता ॥
शृणु पुण्यं महाभागे मम क्षेत्रे तु सुन्दरि ।
यदाप्नोति महाभागे गत्वा च सौकरं प्रति ॥
दश पूर्वान् स्वकान् वंश्यान् परान् सप्त च पञ्च च ।
स्वर्गं नयति तांस्तत्र मातृतः पितृतश्च ह ॥
गमनादेव सुश्रोणि [2]तथैव मुखदर्शनात् ।
सप्तजन्मान्तरं भद्रे जायते विपुले कुले ॥
एवं वै मानुषो भूत्वा अपराधविवर्जितः ।
गमनं तस्य क्षेत्रस्य मरणं तत्र कारयेत् ॥
ये मृतास्तत्र सुश्रोणि क्षेत्रे सूकरके मम ।
तारितास्सर्वसंसाराच्छ्वेतद्वीपाय यान्ति ते ॥

1. १३७, ६
2. P and B, मुखस्य मम दर्शनात्

चक्रतीर्थं महाभागे चक्रं यत्र प्रतिष्ठितम् ।
[1]तत्र गत्वा महाभागे तदन्वायशुभः शुचिः ॥
स्नानं कुर्याद्यथान्यायं माधवे मासि द्वादशीम् ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥
[2]धनधान्यसमृद्धस्तु जायते विपुले कुले ।
तारितः सर्वसंसाराच्छ्वेतद्वीपाय गच्छति ॥
धन्वी तूणी शरी खड्गी जायते च चतुर्भुजः ।
नरो भूत्वा महाभागे स मुक्तः सर्वकिल्बिषात् ॥
अन्तकाले महाभागे यो गच्छेच्छौकरं प्रति ।
तस्य पुण्यं प्रवक्ष्यामि स्नातस्याऽपि यशस्विनि ॥
पातकान्यपि यः कृत्वा मूर्खो भूत्वा दृढव्रतः ।
कौमुदस्य तु मासस्य शुक्लपक्षे तु द्वादशीम् ॥
तारिताः पितरस्तेन तथैव च पितामहाः ।
यावन्ति जलबिन्दूनि तस्य गात्रेषु सुन्दरि ॥
तावद्वर्षसहस्राणि मद्भक्तश्चैव जायते ।
[3]मृतास्तत्र विशालाक्षि रूपतीर्थे महौजसि ॥
[4]दीप्तिमन्तश्च जायेरन् द्युतिमन्तश्चतुर्भुजाः ।
पुनरन्यत् प्रवक्ष्यामि तत्र सौकरके मम ॥
योगितीर्थमिति ख्यातं दुर्विज्ञेयमृषेरपि ।
योगितीर्थे च ये स्नात्वा मम कर्मपरायणाः ॥
क्रोधरागविनिर्मुक्तास्ते यान्ति कृतनिश्चयाः ।
अहोरात्रोषितस्तत्र यः करोति यशस्विनि ॥

1. These two lines omited by B
2. Omitted by B
3. Omitted by B
4. Omitted by P

तीर्थे स्नानं विनिर्मुक्तो मम कर्मपरायणः ।
[[1]स तं मृगयते तीर्थं योगायतनसंस्थितः ॥
स च तं लभते तीर्थं मत्प्रसादान्न संशयः ।
तत्र प्राणान् परित्यज्य मम कर्मपरायणः[2] ॥]
[3]सर्वायुधसमायुक्तो दीप्तिमांश्च चतुर्भुजः ।
योगिश्रेष्ठतमो भूत्वा श्वेतद्वीपं स गच्छति ॥
[4]एतत्ते कथितं भद्रे योगितीर्थं महाफलम् ।
अस्य चिह्नं प्रवक्ष्यामि योगितीर्थस्य सुन्दरि ॥
मार्गशीर्षस्य मासस्य शुक्लपक्षे तु द्वादशीम् ।
अकस्मादन्धकारोऽत्र तस्मिंस्तीर्थे तु जायते ॥
त्रीणि हस्तसहस्राणि त्रीणि हस्तशतानि च ।
त्रयो हस्ता विशालाक्षि परिमाणं विधीयते ॥
एतच्चिह्नं ततो दृष्ट्वा मरणं योऽत्र कारयेत् ।
स्नानं चैव विशालाक्षि पूर्वोक्तां गच्छते गतिम् ॥
एतच्चिह्नं महाभागे योगितीर्थे मयि स्थिते ।
[5]आश्रयेत् सिद्धिकामस्तु यदीच्छेत् परमां गतिम् ॥
पुनरन्यत् प्रवक्ष्यामि तीर्थे सौकरके मम ।
यत्र तप्तं तपश्चैव सोमेन तदनन्तरम् ॥
सोमेन रचिता भूमिर्दृश्यते चन्द्रमःप्रभा ।
आत्मनः पश्यति च्छायां यथा न्यायपथे स्थितः ॥

1. [ ] P and B supply these three lines
2. Half a page in folio 43 of B is left blank here and all the intervening verses upto कोकामुखमुपस्पृश्य on p. 214 are missing in B
3. P omits this line
4. P omits three lines from here
5. P. मार्गयेत्

सोमश्चैव न दृश्येत एष वै विस्मयः परः ।
एतत्ते कथितं भद्रे सोमतीर्थविनिश्चितम्[1] ॥
भवन्ति मनुजा येन त्यक्त्वा संसारसागरम् ।
तस्य पूर्वेण पार्श्वेण तीर्थं गृध्रवटं स्मृतम् ॥
यत्र कामो मृतो गृध्रो मानुषत्वमुपागतः ।
स्नानं साकोटके तीर्थे यः प्राप्नोति च[2] माधवि ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥
नन्दनं वनमाश्रित्य मोदते तत्र वै सदा ।
पुनरन्यत् प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ॥
तीर्थं वैवस्वतं नाम आदित्यो यत्र तप्यते ।
तेन तप्तं महाभागे पुत्रार्थेन यशस्विनि ॥
अष्टमेन तु भक्तेन यस्तु स्नायीत सुन्दरि ।
दशवर्षसहस्राणि आदित्येन स मोदते ॥
अथवा म्रियते तत्र तीर्थे वैवस्वते शुभे ।
न स गच्छति सुश्रोणि यमस्य भवनं क्वचित् ॥
मरणं च प्रवक्ष्यामि तत्र सौकरके भुवि ।
कृत्वा ह्यनशनं चैव दिनानि दश पञ्च च ॥
सर्वसङ्गान् परित्यज्य मम लोकाय गच्छति ।

॥ [3]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे सूकरमाहात्म्यं
समाप्तम् ॥

1. P. विनिश्चयः
2. P. सः माधवि
3. P omits the colophon

|| १४ ||

## || अथ कोकामुखमाहात्म्यम् ||

तत्र वराहपुराणे—

वराह उवाच—

[1]नाऽस्ति कोकामुखात्क्षेत्रं नाऽस्ति कोकामुखाच्छुभम् ।
नाऽस्ति कोकामुखात्स्नानं[2] नाऽस्ति कोकामुखात्प्रियम् ॥
शुचिः कोकामुखं गत्वा परं योगमवाप्नुयात् ।
कर्माणि रक्तः कुर्याच्च दिष्टं भवति चाऽऽत्मनः ॥
यानि यानि च क्षेत्राणि त्वया पृष्ठे वसुन्धरे ।
कोकामुखसमं तीर्थं[3] न भूतं न भविष्यति ॥
मम सा परमा मूर्तिर्न तां जानन्ति मोहिताः ।
स्थितां कोकामुखे भूमि एतत्ते कथितं मया ॥

तथा—

[4]पञ्चयोजनविस्तारे क्षेत्रे कोकामुखे मम ।
यस्तीर्थानि विजानाति न स पापेन लिप्यते ॥
तत्र कोकामुखे तीर्थे स्थितोऽहं दक्षिणामुखः ।
वराहरूपी भगवांस्तिष्ठामि पुरुषाकृतिः ॥

1. १४०, १०-१३
2. P. स्थानं
3. P. क्षेत्रं
4. १४०, ८४

वामोन्नतमुखं कृत्वा पञ्चदंष्ट्रासमन्वितम् ।
पश्यामि च जगत् सर्वं ये च भक्ता मम प्रियाः ॥
यदि कोकामुखं गच्छेत् कदाचित् कालपर्ययात् ।
[1]न ततः स निवर्तेत यदीच्छेद्गतिमुत्तमाम् ॥
न सांख्येन न योगेन सिद्धो याति महत्पदम् ।
यदि कोकामुखं यस्तु तवैतत् कथितं मया ॥

तत्र महाभारते—

[2]कोकामुखमुपस्पृश्य ब्रह्मचारी यतव्रतः ।
जातिस्मरत्वं प्राप्नोति दिष्टमेतत् पुरातने ॥

'दिष्टं' कथितम्, 'पुरातने' पुराणे ॥

॥ [3]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे कोकामुखमाहात्म्यं
समाप्तम् ॥

1. P omits these two lines
2. वन, ८२, १५८
3. P omits the colophon

## ॥ १५ ॥

## ॥ अथ बदरिकाश्रममाहात्म्यम् ॥

तत्र वराहपुराणे—

वराह उवाच—

[1]तस्मिन् हिमवतः पृष्ठे स्थानं गुह्यं परं मम ।
तत्राऽहमग्निना भूमि तपसा परितोषितः ॥
अग्निना सदृशो भूत्वा कर्म कृत्वा सुदुष्करम् ।
प्राप्नुवन्ति च मद्भक्ता बदर्याश्रममुत्तमम् ॥
सुदुर्लभं च तत्क्षेत्रं हिमकूटशिलातलम्[2] ।
यस्तु तत् प्राप्नुते क्षेत्रं कृतकृत्यो भवेन्नरः ॥
ब्रह्मकुण्डेति विख्यातमस्ति तत्र शिलोच्चये ।
स्नानं करोति यस्तत्र त्रिरात्रोपोषितो नरः ॥
अग्निष्टोमशतात्तुल्यं फलं प्राप्नोति मानवः ।
उषित्वा तत्र कृच्छ्राणि यदि प्राणान् परित्यजेत् ॥
ब्रह्मलोकमतिक्रम्य [3]मम लोकं स गच्छति ।
अग्निकुण्डेति विख्यातं तत्र कुण्डे परं मम ॥

1. १४१, १

2. The second half of this verse and the first half of the next are omitted by B

3. P and B, मल्लोकं प्रतिपद्यते

यदि तत्र कृतप्राणः कृतचान्द्रायणव्रतः ।
अग्निलोकमतिक्रम्य मम लोकं स गच्छति ॥

॥ [1]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे बदरिकाश्रममाहात्म्यं
समाप्तम् ॥

1. P and B omit the colophon

॥ १६ ॥

## ॥ [1]अथ मन्दारमाहात्म्यम् ॥

तत्र वराहपुराणे—

वराह उवाच—

[2]पुनरन्यत्प्रवक्ष्यामि एकान्ते शृणु सुन्दरि ।
स्थानं मे परमं गुह्यं कर्मिणां तु सुखावहम् ॥
जाह्नव्या दक्षिणे कूले विन्ध्यपृष्ठसमाश्रिते ।
मन्दारेति च विख्यातं सर्वभागवतप्रियम् ॥
तत्र त्रेतायुगे भूमि कामो[3] नाम महाद्युतिः ।
भविष्यति न सन्देहः स मेऽर्चां स्थापयिष्यति ॥
क्रीडमानोऽस्म्यहं तत्र दृष्ट्वा मन्दारपुष्पितम् ।
कुण्डान्येकादशाऽन्यत्र विद्धि मे सन्ति सुन्दरि ॥
मम चैव प्रभावेण मन्दारश्च महाद्रुमः ।
द्वादश्यां च चतुर्दश्यां स पुष्यति द्रुमोत्तमः ॥
तीर्थे मन्दारकुण्डे तु एकभक्तोषितो नरः ।
स्नानं करोति शुद्धात्मा स गच्छेत् परमां गतिम् ॥
अत्र प्राणान् प्रमुञ्चेत कुण्डे मन्दारसंज्ञिते ।
तपः कृत्वा महाभागे मम लोकं स गच्छति ॥

1. वी. मि. ती. p. 454
2. १४३, १
3. P and B, रामो

तथा—

[1]मन्दारं परमं गुह्यं तस्मिन् गुह्ये शिलोच्चये ।
दक्षिणार्धे स्थितं चक्रं वामभागे च वै गदा ॥
लाङ्गलं मुसलं चैव शङ्खं तिष्ठति चाऽग्रतः ।
एतन्न जानते केचिन्मम मायाप्रमोहिताः ॥
मुक्त्वा भागवतास्सर्वान् [2]श्वेतवाराहसंज्ञितान् ।

॥ [3]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे मन्दारमाहात्म्यं
समाप्तम् ॥

1. १४३, ४९
2. वी. मि. ती., p. 454, reads श्रितान् वाराहसंज्ञितान्
3. P and B omit the colophon

## ॥ १७ ॥

## ॥ [1]अथ शालग्राममाहात्म्यम् ॥

तत्र वराहपुराणे—

वराह उवाच—

अस्ति स्थानं परं गुह्यं तस्मिन् गुह्ये शिलोच्चये।
गण्डक्याश्चोत्तरे पार्श्वे गिरिराजस्य दक्षिणे॥
शालग्राम इति ख्यातं मम भक्तसुखावहम्।
ममैतद्रोचते स्थानं गिरिकूटे शिलोच्चये॥
शालग्राम इति ख्यातं भक्तसंसारमोक्षणम्।
पञ्चादशाऽत्र गुह्यानि शालग्रामे यशस्विनि॥
अद्याऽपि तन्न जानन्ति मुक्ता वाराहसंज्ञितान्।

तथा—

तत्र देवह्रदं नाम मम क्षेत्रं यशस्विनि।
तत्र क्रान्ता मया भूमि बलियज्ञविनाशने॥
स ह्रदो वरदश्श्रेष्ठो मनोज्ञः शुभशीतलः।
अगाधश्च सदा भूमि देवानामपि दुर्लभः॥
तस्मिन् ह्रदे महाभागे सदा मम कृतोदके।

1. वी. मि. ती., pp. 492-494 dealing with this section, are idendical with the text

चक्राङ्काः परितो मत्स्याः पर्यटन्ति इतस्ततः ॥
तस्मिन् देवह्रदे भूमि चतुर्विंशतिद्वादशीम् ।
सौवर्णानि च पद्मानि दृश्यन्ते उदिते रवौ ॥
दृश्यन्ते तावदेतानि यावन्मध्यन्दिने स्थितः ।
तत्र स्नानं प्रकुर्वीत दशभक्तोषितो नरः ॥
दशानामश्वमेधानां फलं प्राप्नोति मानवः ।
अथाऽत्र मुञ्चति प्राणान् मम चित्तव्यवस्थितः ॥
[1]अश्वमेधफलं भुक्त्वा मम लोकाय गच्छति ।
पूर्वामुखस्त्वहं तत्र शालग्रामे यशस्विनि ॥
भविष्यामि न सन्देहो भूमि भागवतप्रियः ।
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ॥
यत्र गुह्यं परं क्षेत्रं न जानन्ति विमोहिताः ।
[2]शिवो मे दक्षिणे स्थाने तिष्ठते विगतज्वरः ॥
लोकानां प्रवरः श्रेष्ठः सर्वलोकधरो [3]हरः ।
तमवन्द्य तु गोविन्दं वन्दमानस्य सुन्दरि ॥
वृथा गमनमित्याहुरेवमेतन्न संशयः ।
शिवं देवं तु वन्दित्वा भूमि मां यश्च वन्दते ॥
लभते पुष्कलां सिद्धिं या मया च[4] प्रकीर्तिता ।
समस्तं च मम क्षेत्रं दशयोजनविस्तरम् ॥
मृता अत्र नरा यान्ति मां सत्कर्मानुसारिणः ।

1. Omitted by B
2. P and B, शिवो; so also वी. मि. ती. p. 493; Udaipur Ms. reads शिरो
3. B. वी. मि. ती. p. 493 सर्वलोकवरो; P. सर्वलोकहरो
4. P and B as well as वी. मि. ती. p. 493, मयात्र

महाभारते—

[1]सदा सन्निहितो यत्र हरिर्वसति भारत ।
शालग्राम इति ख्यातो विष्णोरद्भुतकर्मणः ॥
अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ।
अश्वमेधमवाप्नोति विष्णुलोकं स गच्छति ॥
[2]तिलोपदानं धर्मज्ञ सर्वपापप्रमोचनम् ।
समुद्रास्तत्र चत्वारः कूपे सन्निहिताः सदा ॥
तत्रोपस्पृश्य राजेन्द्र न दुर्गतिमवाप्नुयात् ।
अभिगम्य त्रिलोकेशं[3] वरदं विष्णुमव्ययम् ॥
विराजति यथा सोमो मेघैर्मुक्तो युधिष्ठिर ।
जातिस्मर उपस्पृश्य शुचिः प्रयतमानसः ॥
जातिस्मरत्वमाप्नोति स्नात्वा तत्र न संशयः ।

॥ [4]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे शालग्राममाहात्म्यं
समाप्तम् ॥

[1] वन, ८२, १२३-१२८
[2] तत्रोदपानं इति वी. मि. ती p. 494
[3] P and B, महादेवं
[4] P and B omit the colophon

## ॥ अथ स्तुतस्वामिमाहात्म्यम् ॥

तत्र वराहपुराणे—

वराह उवाच—

[1]स्तुतस्वामीति विख्यातं मम क्षेत्रं भविष्यति ।
द्वापरं युगमासाद्य तत्र स्थास्यामि सुन्दरि ॥
पुत्रोऽहं वसुदेवस्य देवक्या गर्भनिस्सृतः ।
वासुदेव इति ख्यातः सर्वदानवसूदनः ॥
कौमुदस्य तु मासस्य शुक्लपक्षे तु द्वादशीम् ।
त्रयाणां वाजपेयानां यज्ञानां स्नानमात्रतः ॥
फलं प्राप्नोति सुश्रोणि धृतमात्मनि मां नरः ।
अथाऽत्र मुञ्चति प्राणान् मम कर्मानुसारतः ॥
वाजपेयफलं भुक्त्वा मम लोकं प्रपद्यते ।
आयसी प्रतिमा तत्र ममाऽभेद्या न संशयः ॥
ब्रुवन्ति केचित् काष्ठेति आयसीत्यपरेऽब्रुवन् ।
पाषाणीति परे ब्रूयुः परे वज्रमयीति च ॥
ऊर्ध्वा वा यदि वाऽधस्ताद्भवन्ति मम पार्श्वतः ।
तेषां तथेति स्पृशन्ति शिरोमध्ये तु न क्वचित् ॥
ये च पश्यन्ति मां भूमि मणिपूरगिरौ स्थितम् ।

1. १४८, ९

[1]त्रिसन्ध्यमावसन्तस्तु मत्प्रसादाच्च सुन्दरि ॥
ते सर्वे किल्बिषान्मुक्ता यान्ति ते परमां गतिम् ।

तथा--

[2]सुगुह्यं पूर्वपार्श्वे तु मम क्षेत्रस्य सुन्दरि ।
अदूरात् त्रीणि क्रोशानि परिमाणं विधीयते ॥
धूतपापेति विख्यातं तत्र गुह्यं परं मम ।
अदूरात् पञ्च क्रोशानि मम क्षेत्रस्य पश्चिमे ॥
तत्र कुण्डे महाभागे मम यद्रोचते जलम् ।
तत्र स्नानं प्रकुर्वीत पञ्चरात्रोषितो नरः ॥
यद्वंशे दुष्कृतं किञ्चिद्यच्च आत्मनि संस्थितम् ।
तत्र कृत्वोदकं भद्रे धूतपापे यशस्विनि ॥
महेन्द्रेणैव मोदेत इन्द्रलोके न संशयः ।
अथाऽत्र मुञ्चति प्राणान् धूतपापे यशस्विनि ॥
इन्द्रलोकं समुत्सृज्य मम लोकं स गच्छति ।
तत्राऽऽश्चर्यं महाभागे धूतपापे शृणुष्व मे ॥
वर्तते च विशालाक्षि मणिपूरगिरौ स्थितम् ।
तावन्न पतते धारा यावत्पापं न धूयते[3] ॥
धूतपापे च सुश्रोणि धाराऽत्र पतते महीम् ।
तत्तु क्षेत्रं वरारोहे समन्तात्पञ्चयोजनम् ॥
तत्र तिष्ठाम्यहं देवि पश्चिमां दिशमास्थितः ।

1. P. त्रिसन्ध्यमाचमन्तस्तु

2. १४८, ५६

3. P and B, मुञ्चति

तत्र चाऽमलका भद्रे अदूरादर्धयोजनात् ॥
तान्न कश्चिद्विजानाति पापकर्मा नराधमः ।
उपोष्य च त्रिरात्राणि श्रद्दधानो जितेन्द्रियः ॥
तत्र गत्वा वरारोहे उदिते तु दिवाकरे ।
अथ मध्याह्नवेलायां यदि वाऽस्तं गते रवौ ॥
एकचित्तेन गन्तव्यं धृतिं कृत्वा सुनिश्चलाम् ॥
यस्तत्र लभते भद्रे फलमामलकं शुभम् ।
पञ्चरात्रेग पश्येत्तु तस्मिन् भूतगिरौ स माम् ॥

॥ [1]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे स्तुतस्वामिमाहात्म्यं
समाप्तम् ॥

1. P omits the colophon

॥ १९ ॥

## ॥ [1]अथ द्वारकामाहात्म्यम् ॥

तत्र वराहपुराणे—

वराह उवाच—

[2]अस्ति द्वारवती नाम निर्मिता विश्वकर्मणा ।
सुधर्मा नाम च सभा[3] वायुरानीतवान् मम ॥
पञ्चयोजनविस्तीर्णा दशयोजनमायता ।
वसाम्यत्र वरारोहे पञ्चपञ्चाशतं समाः ॥
भारावतरणं कृत्वा देवानां च महत्प्रियम् ।
[4]पुनरेष्यामि सुश्रोणि घातयित्वा महासुरान् ॥
मूर्तिमात्मनि मे भूमि कथ्यमानानि मे शृणु ।
अस्ति पञ्चशरो नाम तस्मिन् गुह्यं परं मम ॥
समुद्रतीरमुत्सृज्य [5]यत्र भक्तसुखावहम् ।
तत्र स्नानं तु कुर्वीत षष्ठनक्तोषितो नरः ॥
मोदते नाकपृष्ठे तु अप्सरोगणसंकुले ।
अथवा मुञ्चति प्राणान् मामेव प्रतिपद्यते ॥
प्लक्षो वै तत्र सुश्रोणि शतशाखो महाद्रुमः ।

1. वी. मि. ती. pp. 531-2. वी मि. supplements it by citations from स्कन्दपुराण and प्रह्लादसंहिता

2. १४९, ७

3. P. सतां

4. P, corrected by B, has gaps from here onwards

5. P and वी. मि. ती. p. 531, read मम

चतुर्विंशतिद्वादश्यां स भवेत् फलभागसौ[1] ॥
फलं न लभते कश्चिन्मुक्त्वा भागवतं शुचिम् ।
लभन्ते ये फलं तत्र गुह्ये पञ्चशरस्य च ॥
ते लभन्ते परां सिद्धिमेवमेतन्न संशयः ।
प्रभासमिति विख्यातं तस्मिन् गुह्यं परं मम ॥
तत्राऽभिषेकं[2] कुर्वीत पञ्चरात्रोषितो नरः ।
मोदते सप्तद्वीपेषु गुह्यानि च स गच्छति ॥
अथवा मुञ्चति प्राणान् प्रभासे गतकिल्बिषः ।
सर्वलोकान् परित्यज्य मल्लोकं प्राप्नुते नरः ॥
पञ्चकुण्डमिति ख्यातं तस्मिन् गुह्यं परं मम ।
तत्राऽभिषेकं कुर्वीत पञ्चरात्रोषितो नरः ॥
चतुर्विंशतिद्वादश्यां मध्याह्ने च दिवाकरे ।
रौप्यसौवर्णकं पद्मं दृश्यते नाऽत्र संशयः ॥

तथा—

[3]कादेवकमिति ख्यातं कुण्डं क्षेत्रे परं मम ।
अत्र पीत्वा महाभागे वृषणयोपर्यमक्षयम्[4] ॥
तत्राऽभिषेकं कुर्वीत चतुःकालसमन्वितः ।

तथा—

सङ्गमं नगरं नाम तस्मिन् क्षेत्रे परं मम ॥
मम चोत्तरपार्श्वे तु अदूरात्सप्रयोजनम् ।

1. P. फलभाग्यता ; वी. मि. ती. p. 531, पुण्यभागसौ
2. P. तत्र स्नानं तु
3. १४९, ५२
4. वी. मि. ती. p. 532, दृष्टयोर्युगपत्क्षयम् ।

तत्सरो मम पार्श्वे तु देवानामपि दुर्लभम् ॥
[1]अस्ति रैवतकं नाम तस्मिन् क्षेत्रे परं मम ।
[2]सर्वलोकेषु विख्यातं चन्द्रमाः क्रीडते यतः ॥
बहूदकशिलापङ्का गुहाश्चाऽत्र दिशो दश ।
वापी च शोभना चैव देवानामपि दुर्लभा ॥
तत्राऽभिषेकं कुर्वीत षष्ठकालोषितो नरः ।
गच्छते सोमलोकाय कृतकृत्यो भवेन्नरः ॥
अथाऽत्र मुञ्चति प्राणान् मम लोकं प्रपद्यते ।
विष्णुचङ्क्रमणं नाम तस्मिन् क्षेत्रे परं मम ॥
विद्धोऽस्मि तत्र व्याधेन प्राप्तो मूर्तिं स्वकां पुनः ।
तत्र कुण्डं महाभागे मणिपूरगिरौ स्थितम् ॥
तत्राऽभिषेकं कुर्वीत नित्यकालमतन्द्रितः ।

तथा—

[3]तस्मिन् क्षेत्रे महाभागे स्थितोऽहमुत्तरामुखः ॥
सर्वभागवतप्रीत्यै समुद्रतटमाश्रितः ।
अहं रामेण सहितः सा च राका स्वसा शुभा[4] ॥
त्रयस्तत्रैव तिष्ठामो द्वारकायां यशस्विनि ।

॥ [5]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे द्वारकामाहात्म्यं
समाप्तम् ॥

1. १४९, ६६
2. B omits seven lines form here
3. १४९, ८५
4. B. सा च एका मया स्वसा
5. P omits colophon

## ॥ २० ॥

# ॥ [1]अथ लोहार्गलमाहात्म्यम् ॥

तत्र वराहपुराणे—

वराह उवाच—

[2]गुह्यमन्यत् प्रवक्ष्यामि कारणं सततं शुभे ।
अहं सिन्धोस्तटे भद्रे गत्वा वै त्रिंशयोजनम् ॥
म्लेच्छमध्ये वरारोहे हिमवन्तं समाश्रितः ।
तत्र लोहार्गलं नाम निवासो मे विधीयते ॥
गुह्यं च परमं स्थानं समन्तात् पञ्चयोजनम् ।
[3]दुर्गमं दुस्सहं चैव धावनैः[4] परिवेष्ठितम् ॥
तत्र तिष्ठाम्यहं भद्रे उदीचीं दिशमास्थितः ।
केचिन्न जानते तत्र स्वमूर्तिं मम संस्थिताम् ॥
ये तु यान्ति वरारोहे स्वकर्मपरिनिष्ठिताः ।
ते मां चैवाऽत्र पश्यन्ति गुह्यानि च यथा तथा ॥
तत्र कुण्डे तु सुश्रोणि स्नानं कुर्वीत निश्चितम् ।
उपोष्य तु त्रिरात्राणि विधिदृष्टेन कर्मणा ॥
तत्र स्वर्गसहस्रेषु मोदते नाऽत्र संशयः ।
अन्यच्च ते प्रवक्ष्यामि तत्र यत् परमाद्भुतम् ॥

1. वी. मि. ती. pp. 489-490
2. १५१, ६
3. वी. मि. दुर्दशं
4. B. पापकैः ; वी. मि. and B, पावकैः

चतुर्विंशतिद्वादश्यां न मांसेन विना मम ।
बलिर्हि दीयते तत्र सर्वकामविशोधनः ॥
अश्वो मे कल्पितस्तत्र सर्वरत्नविभूषितः ।
श्वेतः कुमुदचक्राभः[1] शङ्खचक्रसमन्वितः ॥
शार्ङ्गमेतद्धनुस्तत्र अक्षसूत्रं कमण्डलुः ।
आसनं भूषणं दिव्यं दीयते चाऽन्नमुत्तमम् ॥
अस्मिन् गुह्ये महाभागे क्षेत्रे लोहार्गले मम ।
सिद्धिकामेन मर्त्येन गन्तव्यं नाऽत्र संशयः ॥
समन्तात् पञ्चविंशं तु योजनानि वरानने ।
न तस्य कर्म विद्येत एष मे निश्चयः परः ॥

॥ [2]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे लोहार्गलमाहात्म्यं
समाप्तम् ॥

1. B and वी. मि. p. 490 and P, कुमुदपुष्पाभः
2. P omits colophon. वी. मि. reproduces this section

## ॥ २१ ॥

# ॥[1]अथ केदारमाहात्म्यम् ॥

तत्र देवीपुराणे—

ईशानशिखरं नाम हिमकुन्देन्दुसन्निभम् ।
तत्र देवस्स्वयं साक्षात्तिष्ठते परमेश्वरः ॥
ईशानो लोकविख्यातस्त्रैलोक्यविदितः स वै ।
तत्र रेतोदकं शक्र पूर्वं देवेन निर्मितम् ॥
गोपितं पिहितं तच्च न विज्ञातं सुरासुरैः ।

तथा—

[2]संसारतारणं चाऽन्य[3]पापजालनिकृन्तनम् ॥
केदारमुदकं पीत्वा पुनर्जन्म न विद्यते ।
न योनिषु नियुञ्ज्येत स गच्छेच्छाश्वतं पदम् ॥

[4]तथा—

कृतं प्रकाश्यं तत्कुण्डे यदासीद्गोपितं मम ।
मनुष्याणां हितार्थाय मज्जतां च भवार्णवे ॥
दर्शितं ज्ञानमुदकं पीत्वा न जन्मसंभवः[5] ।

1. वी. मि. ती. pp. 490-492 reproduces this section
2. This line is omitted in वी. मि.
3. P. पाशजाल
4. वी. मि. ती. p. 491 omits तथा indicatve of an interruption
5. P and B, पशूनां पाशमोक्षणम्

न पातुं लभते ब्रह्मा न विष्णुर्न पुरन्दरः ॥
पिबन्ति मानुषाः सर्वे यस्य वै तुष्यते शिवः ।
न केदारात् परो मोक्ष एवं साक्षाच्छिवोऽब्रवीत् ॥
पृथिव्यां यानि तीर्थानि आसमुद्रात् सरांसि च ।
ज्ञानरेतोदकस्यैते कलां नाऽर्हन्ति षोडशीम् ॥
अश्वमेधसहस्रं च योजयेत् पृथिवीपतिः ।
ज्ञानरेतोदकस्यैतत् सहस्रांशेन पूर्यते ॥
अग्निष्टोमसहस्रं तु पौण्डरीकशतं तथा ।
यो जयेद्द्रव्यसंपन्नो ब्राह्मणः क्षत्रियस्तथा ॥
केदारस्य तु तत्सर्वं सहस्रांशं न पूरयेत् ।
कामपस्स्त्रीसहस्राणि पिब खाद च मोद च ।
केदारमुदकं पीत्वा सर्वं तरति दुष्कृतम् ॥

तथा—

ज्ञानं दीक्षाऽथ वा शक्र धारणं भस्मनस्तथा ।
रेतोदकस्य तत्सर्वं कलां नाऽर्हति षोडशीम् ॥

[1]तथा—

यथा पिबन्ति तत्तोयं विधिं तस्य वदाम्यहम् ।
गत्वा मन्दाकिनीं पुण्यां तत्र स्नात्वा स मानवः ॥
देवानामुदकं दत्त्वा पिण्डं पितृषु दापयेत् ।
नमस्कृत्वा तथेशानं भावयुक्तेन चेतसा ॥
गत्वा कुण्डसमीपे तु विधिवद्धिमवत् स्थितः ।
नत्वा देवं शिवं तत्र उमां चाऽपि महेश्वरीम् ॥
नन्दीं गणपतिं चैव सर्वांस्तांश्च गणेश्वरान् ।

1. B supplies तथा

शिवोऽहमिति संचिन्त्य पिबेद्वामेन पाणिना ॥
त्रिः पीत्वा वामहस्तेन दक्षिणेन पुनः पिबेत् ।
त्रीन् वारांस्तेन पीत्वा च भूयश्चाञ्जलिना पिबेत् ॥
तेन पीत्वा तु वारांस्त्रीन् पिबेत्तु बलिवर्दवत् ।
भूमिमाक्रम्य जानुभ्यां तथा हस्तद्वयेन तु ॥
शिरः प्रसार्य वक्त्रेण त्रिः पिबेत् पुनरेव तु ।
उत्थाय नर्देत् त्रीन् वारान् स्फोटेत् त्रींस्तथाऽपरान् ॥
नमस्कृत्य तथेशानं कृताञ्जलिपुटः स्थितः ।
कृतार्थः कृतपुण्योऽसौ शिवसायुज्यमागतः ।
विधिना पीतमुदकं कुलानां तारयेच्छतम् ॥

॥ [1]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे केदारमामाहात्म्यं
समाप्तम् ॥

1. P omits colophon

## ॥ २२ ॥

# ॥ [1]अथ नैमिशमाहात्म्यम् ॥

तत्र महाभारते—

[2]ततस्तु नैमिशं गच्छेत् पुण्यं सिद्धनिषेवितम् ।
तत्र नित्यं निवसति ब्रह्मा देवगणैर्वृतः ॥
नैमिशं प्रार्थयानस्य पापस्याऽर्धं प्रणश्यति ।
प्रविष्टमात्रस्तु नरः सर्वपापैः प्रमुच्यते ॥
तत्र मासं वसेद्धीरो नैमिशे तीर्थतत्परः ।
पृथिव्यां यानि तीर्थानि नैमिशे तानि भारत ॥
अभिषेकान्नरस्तत्र नियतो नियताशनः ।
गवामयस्य यज्ञस्य फलं प्राप्नोति मानवः ॥
पुनात्यासप्तमं चैव कुलं भरतसत्तम ।
यस्त्यजेन्नैमिशे प्राणानुपवासपरायणः ॥
स मोदते स्वर्गलोके एवमाहुर्मनीषिणः ।
नित्यं मेध्यं च पुण्यं च नैमिशं नृपसत्तम ॥
गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः ।
वाजपेयमवाप्नोति ब्रह्मभूतश्च जायते ॥

॥ [3]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे नैमिशमाहात्म्यं
समाप्तम् ॥

1. वी. मि. ती. pp. 494
2. वन, ८२, ५९
3. P and B omit the colophon

## ॥ २३ ॥

# ॥ अथ नानातीर्थमाहात्म्यम् ॥

वामनपुराणे[1]—

तस्मिंस्तीर्थवरे स्नात्वा दृष्ट्वा देवं त्रिलोचनम् ।
पूजयित्वा सुवर्णाख्यं नैमिशं प्रययौ ततः ॥
तत्र तीर्थसहस्राणि त्रिंशत् पापहराणि च ।
गोमत्यां काञ्चनस्थांश्च सुनन्दामध्यवासिनः ॥
[2]तेषु स्नात्वाऽर्च्य देवेशं पीतवाससमच्युतम् ।
देवदेवं तथेशानं संपूज्य विधिना ततः ॥
गयायां गोपतिं द्रष्टुं जगाम [3]स महासुरः ।
सरसि ब्रह्मणः स्नात्वा कृत्वा चाऽस्य प्रदक्षिणम् ॥
पिण्डं निर्वपणं पुण्यं पितॄणां स चकार ह ।
उदपाने तथा स्नात्वा सरयूं च जगाम सः ॥
तस्यां स्नात्वा समभ्यर्च्य गोप्रतारे जलेशयम्[4] ।

महाभारते—

[5]गोप्रतारं ततो गच्छेत् सरय्वास्तीर्थमुत्तमम् ।

1. वी. मि. ती. p. 603 has कल्पतरौ कुरुक्षेत्रानुवृत्तौ वामनपुराणे
2. P omits this line
3. P so, but U and B have सुमहासुरः
4. P and B, कुशेशयम्
5. वन, ८२, ७०-७१

यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः ॥
देहं त्यक्त्वा दिवं यातस्तस्य तीर्थस्य तेजसा ।
रामस्य च प्रासादेन व्यवसायाच्च भारत ॥
तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप ।
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥

वामनपुराणे—

गोप्रतारमभिधाय—

उपोष्य रजनीमेकां विरजां स नदीं ययौ ।
स्नात्वा विरजसे तीर्थे दत्त्वा पिण्डं पितुस्तथा ॥
दर्शनार्थं ययौ श्रीमानजितं पुरुषोत्तमम् ।
तं दृष्ट्वा पुण्डरीकाक्षमक्षरं परमं शुचिः ॥
उपोष्य षड्दिनान्येष महेन्द्रं दक्षिणां ययौ ।
तत्र देववरं शंभुमर्धनारीश्वरं हरम् ॥
दृष्ट्वा संपूज्य च पितॄन् महेन्द्रस्योत्तरं गतः ।
तत्र देववरं शंभुं गोपालं सोमशीतलम् ॥
दृष्ट्वा स्नात्वा सोमतीर्थे सह्याचलमुपागतः ।
तत्र स्नात्वा महोदधौ वैकुण्ठं चाऽर्च्य भक्तितः ॥
पितॄन् पिण्डैः समभ्यर्च्य पारियात्रं गिरं गतः ।
तत्र स्नात्वा लाङ्गुलिन्यां पूजयित्वाऽपराजितम् ॥
करपादे समाहृत्य विश्वरूपं ददर्श सः ।
यत्र देववरः शंभुर्देवानां[1] तु सुपूजितः ॥

1. P and B, गणानां

विश्वरूपमथाऽऽत्मानं दर्शयामास योगवित् ।
तत्र संकुणिकातोये स्नात्वाऽभ्यर्च्य महेश्वरम् ॥
जगामाऽद्रिं च सौगन्धं प्रह्लादो मलयाचलम् ।
[1]महाह्रदे ततः स्नात्वा पूजयित्वा च शङ्करम् ॥
ततो जगाम योगात्मा द्रष्टुं विन्ध्ये सदाशिवम् ।
त्रिरात्रं समुपोष्येशमवन्तीनगरीं ययौ ॥
तत्र शिप्राजले स्नात्वा विष्णुं सम्पूज्य भक्तितः ।
श्मशानं तु जगामाऽथ महाकालवपुर्हरम् ॥
तस्मिन् स सर्वसत्त्वानां तेन रूपेण शङ्करः ।
तामसं रूपमास्थाय संहारं कुरुते वशी ॥
तत्रस्थेन सुवेषेण[2] श्वेतकिर्नाम भूपतिः ।
रक्षितस्त्वन्तकं हत्वा सर्वभूतापहारिणम् ॥
[3]स तत्र हृष्टो वसति नित्यं चैव सहोमया[4] ।
[5]वृतः प्रथमकोटीभिर्वन्दद्भिस्त्रिदशार्चितः ॥
दृष्ट्वाऽथ च महाकालं कालकालान्तकारकम् ।
दैत्यानां यमसंयमनं मृत्युमृत्युं विचित्रकम्(?) ॥
श्मशाननिलयं शंभुं भूतनाथं जगत्पतिम् ।
पूजयित्वा शूलधरं जगाम निषधं प्रति[6] ॥
तत्राऽमरेश्वरं देवं दृष्ट्वा सम्पूज्य भक्तितः ।

1. B omits three lines from here
2. P and B, सुरेशेन
3. P and B, तत्र हृष्टः प्रवसति
4. P. महोदया
5. P and B omit three lines from here
6. P. निषधाधिपं

महोदयं समभ्येत्य हयग्रीवं ददर्श सः ॥
अश्वतीर्थे नरः स्नात्वा दृष्ट्वा च तुरगाननम् ।
श्रीधरं तु विभुं पूज्य पाञ्चालविषयं ययौ ॥
भद्रेश्वरं गणैर्गुप्तं पुत्रमर्थपतेरथ ।
पञ्चात्मकं रथी दृष्ट्वा प्रयागं प्रयतो[1] ययौ ॥
स्नात्वा सन्निहिते तीर्थे यामुने लोकविश्रुते ।
दृष्ट्वा वटेश्वरं रुद्रं माधवं योगशायिनम् ॥
द्वावेव भक्तितः पूज्य पूजयित्वा महेश्वरम् ।
माघमासमथोपोष्य ततो वाराणसीं गतः ॥
दशाश्वमेधे गङ्गायां तीर्थे सुरगृहादिषु ।
सर्वपापहरास्वेषु संपूज्य पितृदेवताः ॥
प्रदक्षिणीकृत्य पुरीं पूज्याऽविमुक्तकेशवौ ।
लोलं दिवाकरं दृष्ट्वा ततो मधुवनं ययौ ॥
तत्र स्वयंभुवं देवं दृष्ट्वा चाऽसुरसत्तमः ।
तमभ्यर्च्य महातेजाः[2] पुष्करारण्यमागतम् ॥
तेषु त्रिष्वपि तीर्थेषु स्नात्वाऽर्च्य पितृदेवताः ।
पुष्कराक्षमयोगन्धिं ब्रह्माणं चाऽप्यपूजयत् ॥
ततो भूयः सरस्वत्यास्तीर्थे त्रैलोक्यविश्रुते ।
कोटितीर्थे रुद्रकोटिं ददर्श वृषभध्वजम् ॥
नैमिशे ये द्विजवरा मागधेयाः ससैन्धवाः ।
धर्मारण्याः पौष्करेया दण्डकारण्यकास्तथा ॥

1. P and B, परतो
2. U. महादेवाः

चाम्पेया भृगुकच्छीया देविका तीरगाश्च ये ।
ते तत्र शङ्करं द्रष्टुं समायाता द्विजातयः ॥
कोटिसंख्यास्त्रियः सिद्धा[1] हरदर्शनलालसाः ।
अहंपूर्वमहंपूर्वमित्येवं वदतो मुने ॥
तान् संक्षुब्धान् हरो दृष्ट्वा महर्षीन् दग्धकिल्बिषान् ।
तेषामेवाऽनुकम्पार्थं कोटिमूर्तिरभूद्धरः ॥
ततस्ते मुनयः प्रीताः सर्व एव महेश्वरम् ।
सम्पूजयन्ति ते भक्त्या तीर्थं कृत्वा पृथक् पृथक् ॥
इत्येवं रुद्रकोटीति नाम शोभमजायत ।
तान् ददर्श महातेजाः प्रह्लादो भक्तिमान् वशी ॥
कोटितीर्थे नरः स्नात्वा तर्पयित्वा वसून् पितॄन् ।
रुद्रकोटीं समभ्यर्च्य जगाम कुरुजाङ्गलम् ॥
तत्र देववरं स्थाणुं शङ्करं पार्वतीप्रियम् ।
सरस्वतीजले मग्नं ददर्श सुरपूजितम् ॥
सारस्वतेऽम्भसि स्नात्वा स्थाणुं सम्पूज्य भक्तितः ।
क्षीरिकां च समभ्येत्य नीलकण्ठं ददर्श ह ॥
नीलतीर्थजले स्नात्वा पूजयित्वा ततः शिवम् ।
जगाम सागरान्ते स प्रभासे द्रष्टुमीश्वरम् ॥
स्नात्वा च स सङ्गमे नद्याः सरस्वत्याऽर्णवस्य च[2] ।
सोमेश्वरं लोकपतिं ददर्श च कपर्दिनम् ॥
यो दक्षशापनिर्दग्धः क्षयी ताराधिपः शशी ।

1. P and B, तपस्सिद्धाः
2. B. सरस्वत्यार्णवस्य

आप्यायितः शङ्करेण विष्णुना च कपर्दिना[1] ॥
तानभ्यर्च्य वरान् देवानाजगाम महालयम् ।
तत्र रुद्रं समभ्यर्च्य स जगामोत्तरान् कुरून् ॥
पद्मनाभं समभ्यर्च्य सप्तगोदावरं ययौ ।
तत्र स्नात्वाऽर्च्य देवेशं भीमं त्रैलोक्यवेदिनम्[2] ॥
गत्वा दारुवने श्रीमान् श्रीलिङ्गं प्रददर्श ह ।
तमभ्यर्च्याऽथ ब्रह्माणीं गत्वाऽर्च्य त्रिदशेश्वरीम् ॥
प्लक्षां च तरणं गत्वा श्रीनिवासमपूजयत् ।
ततश्च कुण्डिनं गत्वा संपूज्य प्राणितृप्तिदम् ॥
सूर्यारके चतुर्बाहुं पूजयित्वा विधानतः ।
मागधारण्यमासाद्य ददर्श वसुधाधिप ॥
तमर्चयित्वा विश्वेशं स जगाम प्रजामुखम् ।
महातीर्थे ततः स्नात्वा वासुदेवं प्रणम्य च ॥
शोणं संप्राप्य संपूज्य रुक्मधर्माणमीश्वरम् ।
महाकाश्यां महादेवं हंसाख्यं भक्तिमानथ ॥
पूजयित्वा जगामाऽथ सैन्धवारण्यमुत्तमम् ।
तं दृष्ट्वाऽर्च्य हरिं चाऽसौ तीर्थं कनखलं ययौ ॥
तत्राऽर्च्य रुद्रं कामेशं वीरभद्रं च दानवः ॥
गणाधिपं च मेघाभं ययावथ गिरिव्रजम् ।
तत्र देवं पशुपतिं लोकनाथं महेश्वरम् ॥
सम्पूजयित्वा विधिवत् कामरूपं जगाम ह ।

1. B has a big gap from here, extending to नरश्चैतेष्वरण्येषु on p. 244

2. P and B, वन्दितम्

शशिप्रभं देववरं त्रिनेत्रं
संपूजयित्वा सहितं मृडान्या ।
जगाम तीर्थप्रवरं महाख्यं
तस्मिन् महादेवमपूजयच्च ॥
तत्र त्रिकूटं गिरिराजपुत्रं
द्रष्टुं जगामाऽथ स चक्रपाणिम् ।
तमीड्य भक्त्या च गजेन्द्रमोक्षणं
जजाप जप्यं परमं पवित्रम् ॥
तत्रोष्य दैत्येश्वरसूनुराददा-
न्मासत्रयं मूलफलं बुभक्षी ।
निवेद्य विप्रप्रवरेषु काञ्चनं
जगाम घोरं स हि दण्डकं वनम् ॥
तत्र दिव्यं महाशङ्कुं वनस्पतिवपुर्धरम् ।
ददर्श पुण्डरीकाक्षं महान्तं चापधारिणम् ॥
तस्याऽधस्तात् त्रिरात्रं तु महाभागवतोऽसुरः ।
स्थितः स्थण्डिलशायी च पठन् सारस्वतं स्तवम् ॥
[1]तस्मात्तीर्थवरं विन्ध्यं सर्वपापप्रणाशनम् ।
जगाम दानवो द्रष्टुं सर्वपापहरं हरिम् ॥

महाभारते—

[2]ततो वाराणसीं गत्वा देवमर्च्य वृषध्वजम् ।
कपिलाह्रदमुपस्पृश्य [3]राजसूयफलं लभेत् ॥

1. P omits four lines from here
2. वन, ८२, ७७
3. P. वाजपेयफलं

मार्कण्डेयस्य राजेन्द्र तीर्थमासाद्य दुर्लभम् ।
गोमती गङ्गयोश्चैव सङ्गमे लोकविश्रुते ॥
अग्निष्टोममवाप्नोति कुलं चैव समुद्धरेत् ।

मत्स्यपुराणे—

कृतशौचं महातीर्थं सर्वपापनिषूदनम् ।
यत्राऽऽस्ते नरसिंहस्तु स्वयमेव जनार्दनः ॥

तथा—

[1]वस्त्रापदं रुद्रकोटिं सिद्धेश्वरमहालयम् ।
गोकर्णं भद्रकर्णं च सुवर्णाख्यं तथैव च ॥
एतानि हि पवित्राणि सान्निध्यात् सन्ध्ययोर्द्वयोः ।
[2]कालञ्जरवनं चैव शङ्कुकर्णं स्थलेश्वरम् ॥
एतानि हि पवित्राणि सान्निध्यैतं मम प्रिये ।

देवीपुराणे—

गङ्गाद्वारं कुरुक्षेत्रं नर्मदाऽमरकण्टकम् ।
यमुनासङ्गमं पुण्यं विदिशा वेत्रवत्यपि ॥
सरयूः कौशिकी विन्ध्या गण्डकी च सरस्वती ।
चन्द्रभागा नदी पुण्या नदी गोदावरी तथा ॥
कावेरी गोमती देवी देविका वरणा तथा ।
एताः पुण्यतमा नद्यो ग्रहणादिषु कीर्तिताः ॥
अन्याश्च बहवः पुण्याः[3] सर्वकालेषु पुण्यदाः ।

1. P. वस्त्रापदं
2. P omits this line
3. P. बाह्याः पुण्याः स्युः

अयने विषुवे ख्याता व्यतीपाते तथैव च ॥
दीनच्छिद्रे तथा दर्शे ब्राह्मणानां च सङ्गमे ।
सम्मोदेषु समाजेषु एकार्थे सप्त पञ्च च ॥

'सम्मोदेषु' उत्सवेषु ; 'समाजेषु' सभासु ; 'एकार्थे' एकस्मिन् प्रयोजने ; 'सप्त पञ्च च' मिलिता भवन्ति तदा पूर्वोक्ता नद्यः पुण्यतमास्तर्पणं च तत्र सर्वकामप्रदम्[1] ॥

तथा[2]—

एवं पर्वसु सर्वेषु चन्द्रे सर्वकलासु च ।
तृतीयायां तु वैशाख्यामष्टम्यां कुजवासरे ॥
चतुर्दश्यां च कृष्णायां भौमाहे पितृतर्पणे ।
कर्तव्यं सर्वकामानां पूरणाय द्विजोत्तमैः ॥
अमावास्यायां संक्रान्तौ शिवाऽऽदित्यौ च यो नरः ।
यजते [3]भगवान् प्रीतः स पूतो भवते मुने ॥

तथा—

[4]कार्त्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसंगमे ।
मार्गे तु ग्रहणं पुण्यं देविकायां महामुने ॥
पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा ।
फाल्गुने वरणा ख्याता चैत्रे पुण्या सरस्वती ॥
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ।
ज्येष्ठे तु कौशीकी पुण्या आषाढे तापिका नदी ॥

1. P. सर्वकालपूरणं च
2. P omits तथा
3. P. भक्तिमान्
4. P omits sixteen lines from here

श्रावणे सिन्धुनामा च भाद्रमासे च गण्डकी ।
आश्विने सरयूश्चैव भूयः पुण्या तु नर्मदा ॥
गोदावरी महापुण्या चन्द्रे राहुसमन्विते ।
सूर्ये चैव शशिग्रस्ते तनो भूते महामुने ॥
नर्मदा तोयसंस्पर्शात् कृतकृत्या भवन्ति ते ।
ये सूर्ये सैंहिके येन ग्रस्ते रेवाजलं नराः ॥
स्पृशन्ति चाऽवगाहन्ते न ते प्रकृतिमानवाः ।
स्पृष्ट्वा शतक्रतुफलं दृष्ट्वा गोदानजं फलम् ॥
स्नात्वाऽश्वमेधतुल्यं च स्पृष्ट्वा सौत्रामणीं लभेत् ।
रविचन्द्रोपरागे तु अयने चोत्तरे तथा ॥
एवं गङ्गाऽपि द्रष्टव्या तद्वदेव सरस्वती ।

तथा—

शिवादित्यफलं यच्च मण्डले समुदाहृतम् ।
संग्रहे मण्डले यागे तदत्र प्राप्नुयान्नरः ॥

शिवादित्ययोर्मण्डले क्षेत्रे तयोर्यत्फलं तद्राहुग्रस्ते शशिसूर्यमण्डले यागे पूजायां प्राप्नोतीत्यर्थः ॥

[1]अरण्येषूषरे क्षेत्रे यत्पुण्यं समुदाहृतम् ।
तदत्र कालमाहात्म्यादुपरागेऽधिकं भवेत् ॥
येन आहृत्य तोयेन स्नानं कुर्युर्गृहेऽपि वा ॥
समन्त्रेणैव पूतेन तेषां पुण्यं ततोऽधिकम् ।
आत्मचित्तानुसारेण पात्रे तैजसपार्थिवे ॥
इष्टकाशैलकाष्ठैर्वा फलं प्राप्नोत्यनिन्दितम् ।
येनैव मृत्तिकां तस्मात्तीर्थादाहृत्य भोजने ॥

1. P. आरण्येषु परे

प्रातः प्रातः समुत्थाय वादयन्ति नरोत्तमाः ।
ते सर्वे पापनिर्मुक्ता भवन्ति विगतामयाः ॥
फलपुष्पोपहारेण यो वा तस्मिन् रवीश्वरौ ।
स्नात्वा संपूजयेद्विप्रः स भवेद्विगतामयः ॥
मन्त्रपूतेन तोयेन कुम्भैः पुण्यजलान्वितैः ।
सफलैर्विधिना स्नात्वा सर्वकामाँल्लभेत सः ॥
तदेतत् कथितं पुण्यं मया ब्रह्ममुखाच्छ्रुतम् ।
तत्समग्रं भवेत्तस्य अरण्येषूषरेषु च ॥
अरण्यानि प्रवक्ष्यामि तथा चैवोषराणि च ।
सैन्धवं दण्डकारण्यं नैमिशं कुरुजाङ्गलम् ॥
उत्पलावर्तकारण्यं जम्बूमार्गं च पुष्करम् ।
हिमवान् सह्यतोऽरण्यमित्येतत्परिकीर्तितम् ॥
नरश्चैतेष्वरण्येषु यस्तु प्राणान् परित्यजेत् ।
ब्रह्मलोकेऽतिथिर्भूत्वा स याति परमां गतिम् ॥
कालिका शिखराख्ये च कालकालालयेऽपि या ।
कालञ्जरे महाकाले तुल्यं वै तेषु यत्फलम् ॥

वायुपुराणे—

[1]कालञ्जरे दशार्णायां नैमिशे कुरुजाङ्गले ।
वाराणस्यां नगर्यां च देयं श्राद्धं प्रयत्नतः ॥
गत्वा चैतानि पूतः स्याच्छ्राद्धमक्षय्यमेव च ।
जपहोमतपोध्यानं यत् किंचित् सुकृतं भवेत् ॥

1, ७७, ९३-९५

महाभारते—

[1]शतद्रुं चन्द्रभागां च वितस्तां चोर्मिमालिनीम् ।
विगाह्य वै निराहारो निर्ममो मुनिवद्भवेत् ॥
काश्मीरमण्डले नद्यो याः पतन्ति महानदीः ।
ता नदीः सिन्धुमासाद्य शीलवान् स्वर्गमाप्नुयात् ॥
[2]पुष्करं च प्रयागं च नैमिशं सागरोदकम् ।
देविका सिन्धुमार्गं च स्वर्गबिन्दुं विगाह्य च ॥
विबोधते विमानस्थः सोऽप्सरोभिरभिष्टुतः ।
हिरण्यबिन्दुं विक्षोभ्य प्रयतश्चाऽभिवन्दनम् ॥
कुशेशयं च देवेशं पूयते तस्य किल्बिषम् ।
गङ्गाद्वारे कुशावर्ते विन्ध्यके नीलपर्वते ॥
तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत् ।
अपां ह्रद उपस्पृश्य वाजपेयफलं लभेत् ॥
ब्रह्मचारी जितक्रोधः सत्यसन्धस्त्वहिंसकः ।
यत्र भागीरथी गङ्गा उत्तरां भजते दिशम् ॥
महेश्वरस्याऽधिष्ठाने यो नरस्त्वभिषिञ्चति[3] ।
एकमासं निराहारः स्वयं पश्यति देवताम् ॥
सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तत्पयः ।
शुभं विगाहते यो वै न नरो जायते पुनः ॥
महाह्रद उपस्पृश्य योऽग्निहोत्रपरः शुचिः ।
एककालं निराहारः सिद्धिं कालेन स व्रजेत् ॥

1. आनु, ६४, ७, ६७; सप्ताहं for शतद्रुं in printed Mahabharata
2. P and B omit three lines from here
3. B. अभिविच्यते. Was this the reason for the Bhāraśivas being crowned in Kāśī Daśāsvamedha ghāt?

महाह्रद उपस्पृश्य भृगुतुङ्गे त्वलोलुपः ।
त्रिरात्रोपोषितो भूत्वा मुच्यते ब्रह्महत्यया ॥
कन्याकूप उपस्पृश्य [1]पर्णशायी कृतोदकः ।
देवेषु कीर्तिं लभते यशसा च विराजते ॥
महागङ्गामुपस्पृश्य कृत्तिकाङ्गारगे तथा ।
पक्षमेकं निराहारः स्वर्गमाप्नोति निर्मलम् ॥
[2]विमानकमुपस्पृश्य पर्णशय्यां कृतोदकः ।
देवेषु कीर्तिं लभते यशसा च विराजते ॥
[वैमानिक उपस्पृश्य] किङ्किणीकाश्रमे तथा ।
निवासेऽप्सरसां पुण्ये कामचारो महीयते ।
कालिकाश्रममासाद्य विपाशायां कृतोदकः ॥
ब्रह्मचारी जितक्रोधस्त्रिरात्रान्मुच्यते पुमान् ।
आश्रमे कृत्तिकायां तु स्नात्वा यस्तर्पयेत् पितॄन् ॥
तोषयित्वा महादेवं निर्मलं स्वर्गमाप्नुयात् ।
महासर उपस्पृश्य त्रिरात्रोपोषितो नरः ॥
[3]त्रयाणां स्थावराणां च द्विपदात्वाद्भयं त्यजेत् ।
देवदारुवने स्नात्वा पूतपाप्मा कृतोदकः ॥
देववंशमवाप्नोति सप्तरात्रोषितः शुचिः ।
कौशाम्बे च कुशस्तम्बे द्रोणधर्मपदे तथा ॥
अथ प्रपतने मध्ये सेव्यतेऽप्सरसां गणैः ।
चित्रकूटे जनस्थाने तथा मन्दाकिनीजले ॥

1. P and B omit all lines which follow, upto किङ्किणीकाश्रमे तथा
2. [ ] Lacuna in the Udaipur Ms. supplied from the printed text.
3. P and B supply these two lines, which are omitted by the Udaipur Ms.

विगाह्य वै निराहारो राजलक्ष्मीं नियच्छति ।
श्यामायास्त्वाश्रमं गत्वा उषित्वा चाऽभिषिच्य च ॥
त्रींस्त्रिरात्रान् समाधाय गन्धर्वनगरं व्रजेत् ।
कौशिकीद्वारमासाद्य वायुभक्षस्त्वलोलुपः ॥
एकविंशतिरात्रेण स्वर्गमारोहते नरः ।
मतङ्गवाप्यां यः स्नायादेकरात्रेण सिध्यति ॥
जम्बूमार्गे त्रिभिर्मासैः संयतः सुसमाहितः[1] ।
अहोरात्रेण चैत्रेण सिद्धिं समधिगच्छति ॥
प्रभासे त्वेकरात्रेण अमावास्यां समाहितः ।
सिध्यते तु महाबाहो न नरो जायते पुनः ॥
उज्जानकमुपस्पृश्य आर्ष्णिषेणस्य चाऽऽश्रमे ।
पिङ्गायाश्चाऽऽश्रमे स्नात्वा सर्वपापैः प्रमुच्यते ॥
कुल्यायां समुपस्पृश्य जप्त्वा चैवाऽघमर्षणम् ।
अश्वमेधमवाप्नोति त्रिरात्रोपोषितः शुचिः ॥
पिण्डारकमुपस्पृश्य एक रात्रोषितो नरः ।
अग्निष्टोममवाप्नोति प्रभातां शर्वरीं शुचिः ॥
[2]मैनाकपर्वते स्नात्वा तथा सन्ध्यामुपास्य च ।
नदं ब्रह्मसरो गत्वा धर्मारण्योपशोभितम् ॥
पौण्डरीकमवाप्नोति प्रभातां शर्वरीं शुचिः ।
मैनाकपर्वते स्नात्वा तथा सन्ध्यामुपास्य च ॥
कामं जित्वाऽथ वै मासं सर्वमेधफलं लभेत् ।

1. B. सिद्धिमाप्नुयात्
2. B omits this line

कालोदकं नन्दिकूटं[1] तथैवोत्तरमानसम् ॥
अभ्येत्य योजनशताद्भ्रूणहाऽपि प्रमुच्यते ।
नन्दीश्वरस्य मूर्तिं तु दृष्ट्वा मुच्येत किल्बिषैः ॥
स्वर्गमार्गह्रदे स्नात्वा स्वर्गलोकं स गच्छति ।
विख्यातो हिमवान् पुण्यः शङ्करश्वशुरो गिरिः ॥
आकरः सर्वरत्नानां सिद्धचारणसेवितः ।
शरीरमुत्सृजेत्तत्र विधिपूर्वमनाशके ॥
अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ।
अभ्यर्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा ॥
ततः सिद्धो दिवं गच्छेद्ब्रह्मलोकं सनातनम् ।
कामं क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ॥
न तेन किञ्चिदप्राप्यं तीर्थाभिगमनाद्भवेत् ।
यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च ॥
मनसा तानि गम्यानि सर्वाण्येव समासतः ।

यमः—

कार्त्तिकीं पुष्करे स्नात्वा सर्वपापैः प्रमुच्यते ।
माघे प्रातः प्रयागे तु मुच्यते सर्वकिल्बिषैः ॥
गयाशीर्षे वटे स्नात्वा माघकृष्णाष्टमीं शुचिः ।
[2]नर्मदाम्भसि च स्नातः पौषकृष्णाष्टमीं शुभाम् ॥
शालग्रामे तथा चैत्रीं सनके च चतुर्दशी ।
शुक्ले स्नात्वा दशम्यां तु पुण्डरीके तथैव च ॥

1. P. नदीकुण्डं, B. नन्दिकुण्डं
2. B and P supply this line, which is missing in the Udaipur Ms.

सन्निहत्य ममावास्यां प्रभाते वा तथा पुनः ।
ओजसे तु नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ॥
यमुनायां तथा माघे कृष्णपक्षे चतुर्दशीम् ।
वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च ॥
गङ्गातोये नरः स्नात्वा मुच्यते सर्वकिल्बिषैः ।
प्रोष्ठपदस्य मासस्य शुक्ला या स्याच्चतुर्दशी ॥
तस्यां स्नातो वितस्तायां मुच्यते सर्वकिल्बिषैः ।
चन्द्रभागाम्भसि स्नात्वा माघपुष्यत्रयोदशीम् ॥
अष्टमीरेवतीयोगे तथा रेवावताम्भसि ।
आषाढ्यां सरयूतोये श्रावण्यां सततं तथा ॥
श्रवणर्क्षमनुप्राप्य यत्र क्वचन सङ्गमे ।
सर्वां चतुर्दशीं पूते देविकायां तथाऽम्भसि ॥
महागङ्गामुपस्पृश्य कृत्तिकाङ्गारके तथा ।
त्रयोदश्यामाश्वयुजे विशालायां तथैव च ॥

देवलः[1]—

कृत्वा पापमविज्ञातं भ्रूणहत्यादि तत्पुनः ।
विनश्यति महायज्ञैरथवा तीर्थचर्यया ॥

अथ सरस्वती–गङ्गा–यमुना–नर्मदा-विपाशा-वितस्ता-कौशिकी–नन्दावरी–चन्द्रभागा[2]—रूत्यलावती—सिन्धुरजुं-नीयापर्णाशा–शोणस्नायी–ऐरावती–पाषाणातीर्था–गोमती-गण्डकी–बाहुदा–रम्या[3]–देविका–[4]गोदावरी – कावेरी – ताम्र-

1. P and B omit the verse from देवल
2. P and B, चन्द्रभागा सरयूरुत्यवती
3. B. बाहुदा
4. B. चम्पा

पर्णी–चर्मण्वती–रेवती–[1]भीमा–[2]रक्षुवीरणा चेति महानद्यः पुण्यतमाः ॥

गङ्गाद्वारं कनखलं शौकरं प्रयागो गङ्गासागर इति गङ्गायास्तीर्थानि ॥

प्लक्षप्रस्रवणं वृद्धकन्याकं सारस्वतमादित्यतीर्थं कौबेरं वैजयन्तं पृथूदकं नैमिशं विनशनं [3]वंशोद्भेदं प्रभासमिति सारस्वतानि ॥

पुष्करमुर्वशं गङ्गयायां गयाशिरः कुरुक्षेत्रं प्रयाग इति [तीर्थानि]। क्षेत्राणि वाराणसी महाभैरवं देवदारुवनं केदार-[4]मुद्यमं रुद्रमहालयम् । त्रस्तावतारं छगलण्डविष्णुशिरं महाकालं कालञ्जरं जम्बुमार्गं चेति आयतनानि ॥

हिमवान् सह्यो विद्रुरो महेन्द्रो हरिश्चन्द्रः शतशृङ्गो देवपर्वतो विन्ध्यपर्वतश्चेति पर्वतानां नामानि ॥

एवमेतान्यान्यपि क्षेत्राण्यायतनपर्वताश्रमतीर्थानि पुण्यतमानि। तदर्थमभिगम्य व्रतोपवासनियमयुक्तस्त्र्यहमवगाहमानस्त्रिरात्रमुषित्वा सर्वपापैः प्रमुच्यते स्वस्तिमांश्च भवतीति ॥ तत्र श्लोकौ—

अभिसङ्गम्य तीर्थानि पुण्यान्यायतनानि च ।
नरः प्रमुच्यते पापाद्ब्राह्मणाश्च तपस्विनः ॥
सर्वाः समुद्रगाः पुण्याः सर्वे पुण्या नगोत्तमाः ।
सर्वमायतनं पुण्यं सर्वे पुण्या वनाश्रमाः ॥

1. P and B, चर्मण्वती वेत्रवती
2. P and B, वङ्क्षूरणा
3. P. रामशोद्भदं for वंशोद्भेदं
4. P. मध्यमं

ब्रह्मपुराणे—

नद्यां प्रत्येकशः स्नाते भवेद्गोदानजं फलम् ।
गोप्रदानैश्च दशभिस्तासां पुण्यं तु सङ्गमे ॥

नरसिंहपुराणे—

[1]मन्दरस्थं हरिं देवं ब्रह्मा पृच्छति केशवम् ।
भगवन् देवदेवेश शङ्खचक्रगदाधर ॥
केषु केषु च क्षेत्रेषु द्रष्टव्योऽसि मया प्रभो ।
भक्तैश्चाऽन्यैः सुरश्रेष्ठ मुक्तिकामैर्विशेषतः ॥
यानि ते गुह्यनामानि क्षेत्राणि च जगत्पते ।
तान्यहं श्रोतुमिच्छामि त्वत्तः पद्मायतेक्षण ॥
किं जपन् सुगतिं याति नरो नित्यमतन्द्रितः ।
त्वद्भक्तानां हितार्थाय तन्मे वद सुरेश्वर ॥

भगवानुवाच—

शृणुष्वाऽवहितो ब्रह्मन् गुह्यनामानि मेऽधुना ।
क्षेत्राणि चैव गुल्मानि तव वक्ष्यामि तत्त्वतः ॥
कोकामुखे वराहं च मन्दारे मधुसूदनम् ।
अनन्तं कपिलं द्वीपे प्रभासे रविनन्दनम् ॥
मत्स्योदपाने वैकुण्ठं महेन्द्रे तु नृपान्तकम् ।
[2]ऋषभे तु महाविष्णुं द्वारकायां तु भूपतिम् ॥
पाण्डिसह्ये तु देवेशं वसुतुङ्गे जगत्पतिम् ।
भल्लीवने महायोगिं चित्रकूटे नराधिपम् ॥

1. ६५, २-३१
2. P. वसुखण्डे

नैमिशे पीतवासं च गयां निष्क्रमणं हरिम् ।
शालग्रामे तपोवासमचिन्त्यं गन्धमादने ॥
कुब्जाम्रके हृषीकेशं गङ्गाद्वारे पयोधरम् ।
गरुडध्वजं तोषलके गोविन्दं नागसाह्वये ॥
बृन्दावने तु गोपालं मथुरायां स्वयम्भुवम् ।
केदारे माधवं विद्याद्वाराणस्यां तु केशवम् ॥
पुष्करे पुष्कराख्यं[1] तु धृपद्वत्यां धृपध्वजे[2] ।
तृणबिन्दुवने[3] वीरमशोकं सिन्धुसागरे ॥
कुशीवटे महाबाहुममृतं तैजसे वने ।
विशाखयूपे विश्वेशं नारसिंहं महावने ॥
लोहार्गले रिपुहरं देवशाले त्रिविक्रमम् ।
पुरुषोत्तमं कुशवने कुब्जके वामनं विदुः ॥
विद्याधरं वितस्तायां वाराहे धरणीधरम् ।
देवदारुवने गुह्यं कावेर्यां नागशायिनम् ॥
प्रयागे योगमूर्तिं च पयोष्ण्यां सुन्दरं विदुः ।
कुमारतीर्थे कौमारं लौहित्ये हयशीरिषम् ॥
उज्जयिन्यां विक्रमं विद्याल्लिङ्गस्फोटे चतुर्भुजम् ।
हरिहरं तुङ्गभद्रायां दृष्ट्वा पापात् प्रमुच्यते ॥
विश्वरूपं कुरुक्षेत्रे मणिकुण्डे हलायुधम् ।
लोकनाथमयोध्यायां कुण्डिने रुक्मिणीपतिम् ॥
भाण्डिरे वासुदेवं च चक्रतीर्थे सुदर्शनम् ।
आद्यं पिष्णुपदे विद्याच्छूकरे शूकरं विदुः ॥

1. P and B, पुष्कराक्षं
2. P and B, जयध्वजे
3. B. तारम्

ब्रह्मेशं मानसे तीर्थे दण्डके श्यामलं विदुः ।
त्रिकूटे नागमोक्षं च मेरुकूटे च भास्करम् ॥
विरजं पुष्पभद्रायां बालं चामीकरे[1] विदुः ।
यशस्करं विपाशायां माहिष्मत्यां हुताशनम् ॥
क्षीराब्धौ पद्मनाभं च विमले च सनातनम् ।
शिवनद्यां शिवकरं गयायां च गदाधरम्[2] ॥
सर्वत्र परमात्मानं यः पश्यति स मुच्यते ।
अष्टषष्टि तु नामानि कीर्तितानि मया तव ॥
क्षेत्राणि चैव पुण्यानि कथितानि विशेषतः ।
एतानि मम नामानि रहस्यानि प्रजापते ॥
यः पठेत् प्रातरुत्थाय श्रृणुयाद्वाऽपि नित्यशः ।
गवां शतसहस्रस्य दत्तस्य फलमश्नुते ॥
[3]दिने दिने शुचिर्भूत्वा क्षेत्राण्येतानि यः स्मरेत् ।
दुस्स्वप्नं न भवेत्तस्य मत्प्रसादान्न संशयः ॥
अष्टषष्टि तु नामानि त्रिकालं यः पठेन्नरः ।
विमुक्तः सर्वपापेभ्यो मम लोके स मोदते ॥
द्रष्टव्यानि यथाशक्ति क्षेत्राण्येतानि मानवैः ।
वैष्णवैस्तु विशेषेण तेषां मुक्तिं वदाम्यहम् ॥
हरिं समभ्यर्च्य तदग्रतः स्थितो
हरिं स्मरन् विष्णुदिने विशेषतः ।
इमं स्तवं यः पठते सदा नरः
प्राप्नोति विष्णोरमृतात्मकं पदम् ॥

1. P. चर्मालके
2. P and B, जनार्दनम्
3. P omits this line

[1]तथा—

[2]उद्दिश्य स्तवबरं ब्रह्माणं भगवान् हरिः ।
पुनरप्याह तीर्थानि यानि तानि निबोध मे ॥
गङ्गा तु प्रथमा पुण्या यमुना गोमती पुनः ।
सरयूः सरस्वती चैव चन्द्रभागाऽथ चर्मिणा[3] ॥
कुरुक्षेत्रे गयां चैव पुष्कराणि तथाऽर्बुदम् ।
नर्मदा च महापुण्या तीर्थान्येतानि चोत्तरे ॥
तापी पयोष्णी पुण्ये द्वे उत्सङ्गे तीर्थमुत्तमम् ।
गोदावरी महापुण्या सर्वत्र द्विजसत्तम ॥
तुङ्गभद्रा महापुण्या यत्राऽहं कमलोद्भव ।
[4]हरेण सार्धं प्रीत्याऽनुवसामि मुनिपूजितः ॥
तुङ्गा च दक्षिणे गङ्गा कावेरी च विशेषतः ।
सह्ये चाऽमलकग्रामे[5] स्थितोऽहं कमलोद्भव ॥
देवदेवेश नाम्ना तु त्वया ब्रह्मन् सदाऽर्चितः ।
तत्र तीर्थान्यनेकानि सर्वपापहराणि वै ॥
तेषु स्नात्वा च पीत्वा च पापं मुञ्चति मानवः ।
इत्येवं कथयित्वा तु तीर्थानि मधुसूदनः ॥
ब्रह्मणे गतवान् ब्रह्मन् ब्रह्माऽपि स्वपुरं गतः ।

तथा—

सूत उवाच—

[6]श्रीसह्यामलकग्रामे [7]देवदेवेशमव्ययम् ।

1. P omits तथा
2. ६६, १-९
3. P and B, निर्मला
4. P and B omit three lines from here
5. Tirunelli in Malabar?
6. ६६, २०-४५
7. Tirunelli ?

आराध्य सिद्धिं संप्राप्तास्सप्तर्षिं च चतुर्मुखैः ॥
तस्य पादतलात्तीर्थं निश्चिनं पश्चिमामुखम् ।
तच्चक्रतीर्थमभवत् पुण्यं पापहरं नृणाम् ॥
चक्रतीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते ।
बहुवर्षसहस्राणि स्वर्गलोके महीयते ॥
शङ्खतीर्थे नरः स्नात्वा वाजपेयफलं लभेत् ।
पुष्यमासे तु पुष्यार्के [1]तद्यात्रादि वसन् मुने ॥
ब्रह्मणः कुण्डिकापूर्वं गङ्गातोयेन पूरिता ।
सह्याद्रौ पतिता ब्रह्मंस्तत्र तीर्थमभून्महान् ॥
नाम्ना तु कुण्डिका तीर्थं शिलावृक्षसमीपतः ।
तत्र ये मुनयः स्नातास्तेऽपि सिद्धिमवाप्नुयुः ॥
त्रिरात्रोपोषितो भूत्वा यस्तिष्ठेत्तत्र मानवः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥
कुण्डिकातीर्थोत्तरतः पिण्डस्थानाच्च दक्षिणम्[2] ।
ऋणमोचनकं नाम तीर्थं तद्गुह्यमुत्तमम् ॥
त्रिरात्रोपोषितो यस्तु तत्र स्नानं समाचरेत् ।
ऋणैस्त्रिभिरसौ ब्रह्मन् मुच्यते नाऽत्र संशयः ॥
श्राद्धं कृत्वा पितॄणां तु पिण्डस्थाने च यो नरः ।
पितॄनुद्दिश्य विधिवत् पिण्डं निर्वापयिष्यति ॥
सुतृप्ताः पितरो यान्ति पितृलोकं न संशयः ।
पञ्चरात्रोषितः स्नात्वा यस्तीर्थे पापनाशने ॥

1. P and B, उद्यमन् दिवसे मुने
2. P and B, दक्षिणात्

सर्वपापक्षयं प्राप्य विष्णुलोके महीयते ।
[1]तत्रैव महतीं धारां शिरसा यस्तु धारयेत् ॥
सर्वत्र तु फलं प्राप्य नाकपृष्ठे महीयते ।
धनुःपाते महातीर्थे भक्तो यः स्नानमाचरेत् ॥
आयुर्योगफलं प्राप्य स्वर्गलोके महीयते ।
शतविन्दौ नरः स्नात्वा शतक्रतुपुरं व्रजेत् ॥
सहस्रविन्दौ महातीर्थे स्नात्वा विष्णुपुरं व्रजेत् ।
वराहतीर्थे विप्रेन्द्र सह्ये यः स्नानमाचरेत् ॥
अहोरात्रोषितो भूत्वा विष्णुलोके महीयते ।
आकाशगङ्गा नाम्ना च सह्याद्रेस्तीर्थमुत्तमम् ॥
शिलातलोन्नतो ब्रह्मन्निर्याता श्वेतमृत्तिका ।
तामालभ्य तु यः स्नाति नरो द्विजवरोत्तम ॥
सर्वक्रतुफलं प्राप्य विष्णुलोके महीयते ।
[2]वाग्मतीसङ्गमं नाम तीर्थं देवस्य दक्षिणे ॥
एकरात्रोषितो यस्तु तत्र स्नातो विचक्षणः ।
अश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥
ब्रह्मन्नमलसह्याद्रेर्यत्तत्तोयं विनिर्गतम् ।
तं तु तीर्थं विजानीहि स्नात्वा पापात् प्रमुच्यते ॥
एतेषु तीर्थेषु नरोऽवगाह्य
पुण्येषु सह्याद्रिसमुद्भवेषु ।
दत्त्वा तु पुष्पाणि हरिं च दृष्ट्वा
विहाय पापं प्रविशेच्च विष्णुम् ॥

1. P and B omit four lines from here
2. P ond B, वाग्वली

सकृत्तीर्थानि सेवेत गङ्गां चैव पुनः पुनः ।
सर्वतीर्थमयी गङ्गा सर्वदेवमयो हरिः ॥
अहो मुञ्चंस्तुरगमेधसहस्रतुल्यं
यच्चक्रतीर्थमिति वेदविदो वदन्ति ।
तत्र स्नाता विरजसो न पुनर्भवन्ति
पादौ प्रणम्य शिरसा मधुसूदनस्य ॥
गङ्गाप्रयागगयनैमिशपुष्कराणि
पुण्यानि यानि कुरुजाङ्गलयामुनानि ।
कालेन तीर्थसलिलानि पुनन्ति पापात्
पादोदकं भगवतस्तु पुनाति सद्यः ॥

॥ इति [1]श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीमल्लक्ष्मीधरविरचिते कृत्यकल्पतरौ
तीर्थकाण्डे नानातीर्थमाहात्म्यं
समाप्तम् ॥

1. P omits colophon; B. इति श्रीमहासन्धिविग्रहिक भट्टश्री-हृदयधरात्मजभट्ट श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ तीर्थकाण्डे नानातीर्थमाहात्म्य-परिच्छेदः ॥

॥ २४ ॥

## ॥ [1]अथ महापथयात्रादि ॥

तत्र ब्रह्मपुराणे—

महापथस्य यात्रा च कर्तव्या तुहिनोपरि ।
आश्रित्य सत्यं धैर्यं च सद्यः स्वर्गप्रदा हि सा ॥
यावत् पौरन्दरौ लोकौ न यातः कार्यगौरवात् ।
तावत्तुषारमध्ये तु कस्तनुं त्यक्तुमुत्सहेत् ॥
यतस्तुषारदाह्यांस्तु मुञ्चन् प्राणान् विचेतनः ।
प्रदक्षिणावर्तशिखं पश्येद्दीप्तं हुताशनम् ॥
साङ्कर्षणं वपुर्विष्णोश्चण्डाग्निं भवदाहकम् ।

वायुपुराणे—

यो वाऽऽहिताग्निप्रवरो वीराध्यानं गतोऽपि वा ।
समाधाय मनः पूर्वं मन्त्रमुच्चारयेच्छनैः ॥
त्वमग्ने रुद्रस्त्वं सुधामहोदधिस्त्वं
सर्वे मारुताः क्षिप्रमीयिरे ।
त्वं वातैयासिसगरी यस्त्वं
प्रस्थिमायीरूपः पातयन् माम् ॥
इत्येवं मनसा मात्रं सम्यगुच्चारणं द्विजः ।
अग्निं प्रविशते यस्तु रुद्रलोकं स गच्छति ॥

1. cf. वी. मि. ती. pp. 609-610

[1]अग्निस्तु भावान् कालः कालो रुद्र इति स्मृतः ।
तस्माद्यः प्रविशेदग्निं स रुद्रमभिवर्तते ॥

देवीपुराणे—

परमेश्वर उवाच—

यदिदं भैरवं रूपं कृतं भूतक्षयं प्रति ।
अनुग्रहाय भूतानां[2] भूधरेन्द्र भविष्यति ॥
तस्मिन् ये भावमापन्ना मत्पुत्रा मयि भाविताः ।
भवन्ति ते च भर्तारो मम तुल्या भवन्तु ते ॥
भुक्त्वा भोगांस्तथा ते तु राजराजे पुरे चिरम् ।
क्रमादनुभवं यान्ति तत्र मोक्षं परं ध्रुवम् ॥
एवं तासां वरो दत्तो देवदेवेन शूलिना ।
नराणां भर्तृकाणां तु नित्यमानन्दको रवः ॥

ब्रह्मोवाच—

ये वै संभावमापन्नाः कृत्वा मनसि वै शिवम् ।
भैरवं यान्ति ते रुद्रभक्त्या यान्ति परं पदम् ॥
ये वा स्नेहाद्भयाल्लोभात् कौतुकाद्यान्ति भैरवम् ।
तेऽपि चैतत्प्रभावेण भुवनानां महीपतिम् ॥
सेवन्ते [3]क्रमयोगेन रुद्रत्वं यान्ति ते द्विजाः ।
अथवा भैरवं रूपं पटगं सुरपूजितम् ॥
कृत्वा प्रायान् महाबाहो भैरवं सर्वकामदम् ।
पञ्चविंशभुजं देवं पीनाङ्गं सुरपूजितम् ॥
खड्गखेटधरं कार्यं शूलोद्यतकरं परम् ।
गजचर्मधरं चाऽन्यौ चक्रोद्यतभुजं तथा ॥

1. Jaipāl, King of Kabul and Lahore, made अग्निप्रवेश in A. D. 1001
2. B. लोकानां
3. P and B, कामयोगेन

खट्वाङ्गं च कपालं च वज्रं डमरुकं तथा ।
एवंविधेन रूपेण संदष्टाधरमाननम् ॥
[1]अज्जकं मिन्दभावं तु दन्तुरं तु त्रिलोचनम् ॥
कुर्वीत भैरवं देवं ससुरासुरवन्दितम् ।
नाना शिवा शिवैर्युक्तं [2]नानाभरणभूषितम् ॥
नवयौवनशोभाढ्यं सर्वशोभाप्रकाशकम् ।
छुरिका नागराजेन वासुकिश्चोपवीतकम् ॥
कुलिकस्तु जटाबन्धे शङ्खपालेन कङ्कणम् ।
तक्षकः पद्मरागश्च कार्यौ केयूरमण्डले ॥
पद्मकर्कोटकौ नागौ नूपुरौ पादगौ शुभौ ।
एवं देवं प्रकुर्वीत भैरवं सर्वकामदम् ॥
तस्य द्वाःस्थौ प्रकर्तव्यौ [3]पीनाङ्गौ सर्वलक्षणौ ।
शूलहस्तौ शुभौ देवौ [4]गजवाजिमुखौ परौ ॥
[5]द्वारकोणे तु गङ्गाया द्वारे कुर्यात्तु भैरवे ।
उद्वेगं तनुपीडादीन् प्रकुर्यादशिवं बहु ॥
मठकूपादिभेदेन भयं कर्तुर्यथा भवेत् ।
एवं चाऽत्र प्रसङ्गेन कथितं तव सुव्रते ॥
कपालशूलहस्तौ तु उत्पलाङ्कुशधारिणौ ।
द्वाःस्थौ देवस्य कर्तव्यौ सर्वाभरणभूषितौ ॥
भैरवं चाऽर्धवदनं ब्रह्मविष्ण्वादिभिर्युतम् ।
शूलभिन्नान्धकं रूपं धार्यमाणं तु कल्पयेत् ॥
एवं पटगतं कृत्वा पूजयित्वाऽपरं विभुम् ।

1. P and B, अन्धकं भिन्दमानन्तु
2. P and B, नागाभरणभूषितम्
3. P. पीताङ्गौ. Lacuna in B
4. P and B, अजवाजिमुखौ
5. P and B, द्वारगौ न तु गङ्गाया द्वारे कुर्यात्तु भैरवम् ।

परागं[1] सर्वमन्त्रेशं रक्तमाल्याम्बरादिभिः ॥
आत्मानं भूषयित्वा तु मुद्रालङ्कृतपाणिना ।
सर्वदेवोत्थितं[2] देवं व्रजेद्वीरसुरेश्वरम्[3] ॥
वीतशोकभयोन्मोहः परमानन्दमास्थितम् ।
प्राप्य[4] तद्वै गृहं रम्यं भोगमोक्षप्रदायकम् ॥
पूजां कृत्वा तु देवेशं गजान्धकमहापहम् ।
आरोहेत् परमं स्थानं भुक्तिमुक्तिप्रदायकम् ॥
अघोरं चिन्तयित्वा तु रूपं स्वच्छन्ददायकम् ।
तस्य वक्त्राऽनले होममात्माहुत्याऽनुकारयेत् ॥
देवचक्रं हुताशं च वयं घृततिलादिकम् ।
होतव्यं तेन भावेन परां सिद्धिसमीहकैः ॥
पाताष्टकेन वीरेण यथावत्तन्निबोधत ।
पतङ्ग इव चाऽऽत्मानं दीप्तेऽग्नौ निक्षिपेद्यथा ॥
पातं पतङ्गनामानं हंससंज्ञमतः परम् ।
संयम्य पक्षसङ्घातं कृत्वा वेगवतीं तनुम् ॥
तं पातं हंसनामानं साधकेच्छाफलप्रदम् ।
मृगोऽन्धरूपगर्तादिलङ्घने वै यथा भवेत् ॥
समपादद्वयस्तद्वन्मृगपातः स उच्यते ।
मुसलं मुसली भूत्वा पातं यत्त्वदुलूखले ॥
विमानध्वजमालादि शाखालोलादिकं लभेत् ।
वृषवन्नर्दयित्वा तु धन्वानं ककुदं द्विज ॥
वृषपातं विजानीयाच्छ[5]क्रलोकफलप्रदम् ।

1. P and B, सानुगं
2. P. सर्वदेवोद्धतं
3. P. वीरेश्वरेश्वरम्
4. B omits two lines from here
5. P and B, रुद्रलोक

सिंहो गजेन्द्रनिधने यथा विक्रमते तनुम् ॥
एवं तत्कृतभावस्तु यातः [1]सिंहं हृदौ मतः ।
कृत्वा च भैरवं रूपं सायुधं विगतज्वरः ॥
शिवानले क्षिपेत् कायं तं पातं भैरवप्रदम् ।
पतङ्गादेर्यथा पाता वाऽऽत्मभावगता द्विज ॥
तथा ते फलदाः सर्वे क्रमतो भैरवं पदम् ।
[2]भवनानि विचित्राणि असंख्येयानि संख्यया ॥
अन्नपानानि यानीह क्रमशः [3]संश्रितानि तु ।
दीक्षादिनाऽपि संपन्ना येऽपि भोगवसङ्गताः[4] ॥
तेऽपि भुक्त्वा चिरं भोगांस्ते यान्ति परमं पदम् ।
पापोऽपि हि पुमांस्तत्र वर्णाश्रमविवर्जितः ॥
प्रभावाद्देवदेवस्य भुङ्क्ते च परमं सुखम् ।
नन्दी केदारदेवश्च तथा रुद्रमहालयः ॥
भैरवेण तु तुल्यानि भोगान्ते मोक्षदानि तु ।
चत्वारि देवशार्दूल सर्वाऽनुग्रहकाणि तु ॥
[5]दुरात्मनोऽपि मुच्यन्ते गत्वैतान्यपि ये नराः ।
विचित्ररूपसंपन्नाः सर्वकामसुखप्रदाः ॥
कन्याद्विरष्टवर्षाश्च पीनोन्नतपयोधराः ।
भुवनेषु विचित्रास्ताः पाता[6]द् भुञ्जन्ति मानवाः ॥
नार्यो वा पतनं कुर्युस्तदा भुञ्जन्ति भैरवान् ।
पुरुषान् दिव्यभोगाद्यान् मम रूपान् महाबलान् ॥

1. P and B, सिंहक्रमो मतः
2. P and B, भुवनानि
3. P and B, संस्थितानि
4. P and B, भावगतङ्गताः
5. P and B, प्रसङ्गेनाऽपि
6. P and B, याताः

गान्धर्वं च तथा ब्राह्मं वायवं चाऽपि वारुणम् ।
तथा वैद्याधरं सौरं मैन्द्रं चान्द्रं समं स्थितम् ॥
स्वकामभोगसम्पन्नं पतनाद्भुवनं भवेत्[1] ।
स्वकामतो भुञ्जयित्वा चाऽन्ते यान्ति परं पदम् ॥
वैष्णवास्थिमयीमालां कम्बुकं शाम्भवं सदा ।
धारयेद्देवदेवेशो लोकानुग्रहकारणात् ॥
ये चित्रधातुकाष्ठोत्थं रत्नशैलमयं नराः ।
पूजयन्ति कृतं पुण्यं ते प्रयान्ति शिवं पदम् ॥
एवं गृहेऽथ शैले वा नदीविन्ध्याटवीषु च ।
भैरवं पूरयेद्यस्तु स लभेदीप्सितं फलम् ॥
पत्रं पुष्पं मठं कूपमारामाणि च भैरवे ।
कृत्वा च तानि चत्वारि देयानि सुखसिद्धये ॥
यद्दत्त्वा सर्वदेवानां फलं प्राप्नोति मानवः ।
विप्रो वा वेदविदुषो तत्फलं भैरवाल्लभेत् ॥
[2]कोटिधा नाऽत्र सन्देहः सर्वात्मा सर्वयोगतः ।

कालिकापुराणे—

हरिश्चन्द्र इति ख्यातो भविष्यति न संशयः ॥
यस्मादस्मिन् कृतो ह्येष प्रयातोऽत्र कृतं पुनः ।
तस्माद्भृगुरयं लोके पुण्यो भवति सर्वशः[3] ॥
अत्र योऽभ्येत्य देवेशं भृगुप्रपतनं नरः ।
साधयेत स गच्छेद्वै हरलोकमतिप्रभम् ॥
महापातकसंयुक्तो व्याधिना समुपद्रुतः ।
योऽत्र साधयते प्राणान् सोऽपि मुच्येन्महाभयात् ॥

1. P and B, लभेत्
2. B omits four lines from this
3. P and B omit this line

यद्वा प्रार्थयतेऽन्यच्च प्राधान्ये नाऽत्र किञ्चन ।
तत् प्राप्नुयान्नरः सर्वमचिरात्तत्र वै स्मृतम् ॥

आदित्यपुराणे—

दुर्वासा उवाच—

कीदृशैस्तत्तपोदानैः पुरीं पश्यन्ति मानवाः ।
भानोर्वा ब्रह्मणः शम्भोर्विष्णोरिन्द्रस्य सर्वशः ॥

भानुरुवाच—

राज्यार्थे निहता ये च राजानो धर्मतत्पराः ।
अग्निविद्युद्धता ये च सिंहव्याघ्रहताश्च ये ॥
प्राप्नुवन्ति च ते सर्वे पुरीमैरावतीं शुभाम् ।
साक्षाद्धि भगवानग्निर्नागस्य वसते मुखे ॥
सिंहव्याघ्रगजेन्द्राणां विष्णुरेव व्यवस्थितः ।
विद्युदग्निहता ये च सिंहव्याघ्रहताश्च ये ॥
नागैश्चैव हता ये च ते नराः पुण्यकर्मिणः ।

॥ [1]इति श्रीभट्टहृदयधरात्मजमहासान्धिविग्रहिकभट्ट-
श्रीलक्ष्मीधर[1]विरचिते कृत्यकल्पतरौ
तीर्थकाण्डे महापथयात्रादिमाहात्म्यं
समाप्तम् ॥

इति लक्ष्मीधरविरचिते कृत्यकल्पतरौ तीर्थकाण्डं समाप्तम्[2] ॥

1. P adds संवत् १६४९, वर्षे आषाढशुक्लत्रयोदश्याम् श्री अकबर-जलादीनविजयराज्ये श्रालाभोपुरे भट्टश्रीदामोदरवाचनार्थं लिपीकृतम् गङ्गादासेन । वाच्यमानं चिरं नन्द्यात् ॥

2. B supplies the finis, and U ग्रन्थसङ्ख्या २५२५ ॥

## APPENDIX A

Works and Authors cited

## APPENDIX B

### Classified Index of Tīrthas

## नर्मदाक्षेत्राणि (६)



## नानातीर्थानि (५८)

## प्रयागान्तर्गततीर्थानि (१२)



## बदरिकाश्रमतीर्थे (२)



## मधुरान्तर्गततीर्थानि (२५)



## वाराणसीक्षेत्रकुण्डानि (२७८)

## सूकरतीर्थानि (५)



## स्तुतस्वामितीर्थानि (३)

APPENDIX C

## General Index of Tirthas

---

PRINTED AT THE MADRAS LAW JOURNAL PRESS, MYLAPORE, MADRAS.

## APPENDIX D

### SUPPLEMENTARY LIST OF TĪRTHAS

### (अ) वाराणसीक्षेत्राणि (५१)

अङ्गारककुण्ड, लि. पु., ५६
अन्धकेश्वर, लि. पु., ६५
अरुणा-सरस्वतीसङ्गम, वाम. पु., १३८
अवधूत, लि. पु., ९३
असि (शुष्कनदी), ब्र. पु., ३०, ३९
उपमन्युलिङ्ग, लि. पु., ९७
ऋषिसङ्गेश्वर, लि. पु., ५४
एकाम्रेश्वर, स्कं. पु., ३७
कपालमोचन, ब्र. पु., ३०
कपिलाह्रद, वाम. पु., २४५
केदारेश्वर, लि. पु., ३७,११८,१३४
केशव (आदि), लि. पु., ४४
कोटितीर्थ, लि. पु., ५४
गङ्गावरणासङ्गम, लि. पु., ४५
गोभिलेश्वर, लि. पु., ९४
चर्चिका, लि. पु., ९६
चामरका, लि. पु., ५३
च्यवनेश्वर, लि. पु., ६६
दशाश्वमेध, वा. पु., २३७
दुण्डिविनायक, लि. पु., १२६
दृगिचण्डेश्वर, लि॰ पु., ३५
देवलेश्वर, लि. पु., ९२
पञ्चकेश्वर, लि. पु., ६५
प्रयागेश्वर, लि. पु., ४५
ब्रह्मतारेश्वर, लि. पु., ८८
मणिकर्णी, लि. पु, १०३, १२१
मण्डलेश्वर, लि. पु., ६६
मत्स्योदरी, लि. पु., ३७, ५९
महालयकूप, लि. पु., ६३
माण्डव्येश्वर, लि. पु., ११९
मुखप्रेक्षणी, लि. पु., ९५
मैत्रीयीलिङ्ग, लि. पु., ४७
रुद्रवास, लि. पु., ६२
रेवन्तेश्वर, लि. पु., ९६
लक्ष्मीकुण्ड (श्रीकुण्ड), लि. पु., ६९
लक्ष्मीश्वर, लि. पु., ६९
ललिता, लि. पु., (मुखप्रेक्षणी) ९६
लोलार्क, लि. पु., ३४, ११८
वरणा, ब्र. पु., ३०, ३५
वीरभद्रेश्वर, लि. पु., ८७
विशालाक्षी, लि. पु., ११५
विश्वावस्वेश्वर, लि. पु., ११६
विश्वेदेवेश्वर, लि. पु., ८७
वेदेश्वर, लि. पु ४४
वैतरणी, लि. पु., ६३
व्याघ्रेश्वर, लि. पु., ९७
व्यासकुण्ड, लि. पु., ८६
शङ्खलिखितेश्वरौ, लि. पु., ९३
शान्तेश्वर, लि. पु., ६६
शुष्कनदी (असि) म. पु., ३९
शौनकेश्वर, लि. पु., १२२
श्मशान, म. पु., २३
श्रीकुण्ड, लि. पु., ६९
संवर्तेश्वर, लि. पु., ९९
सुमन्तुलिङ्ग, लि. पु., ९७
सुषुम्ना, लि. पु., ३५

### (आ) नानातीर्थानि

अमरकण्टक, दे. पु., २४१
अमरेश्वर, देवल, २३६
अर्जुनीया, देवल, २४९
अयोध्या, न. पु., २५२

## APPENDIX E

### TOPOGRAPHICAL NOTES.

(The names of places of rivers or mountains, which have remained unchanged, and are easy to identify are omitted. The figures in brackets after the names refer to the pages in which mention of the *tīrthas* concerned occurs. The names are arranged in the order of the *Nāgarī* alphabet)

*Ayodhyā*, modern Ajodhya near Faizabad, Oudh.

*Amalakā* (224) a river near the Stuta-svāmi-kṣetra, in the United Provinces.

*Amarakaṇṭaka* (240). The source of the rivers Sone and Narbuda in the Mikul (Mekdalā) hills in Gondwāna, Central Provinces.

*Amareśvara* (236) on the Narbuda (Narmadā), on the bank opposite Omkārnāth. Thirty-two miles from Khandwa, G. I. P. Ry.

*Arjunīyā* (249) or *Bāhūdā* a feeder of the Rapti in Oudh. Now named Dhumela.

*Aruṇā-saṅgama* (238). The *Aruṇā* is a small affluent of the Sarasvatī, which joined it near *Pṛthūdaka* (Pehoa). It is lauded by *Bṛhaspatismṛti* as "world-famous" (*lokaviśruta*), see p, 379. Cunningham (A. S. R.. xiv, 102) identifies the Aruṇā river with the Mārkaṇḍa.

*Arbuda*, (253) Mount Abu.

*Alakanandā* (169) a tributary of the Ganges made up of the *Viṣṇu Gaṅgā* and *Sarasvatī-Gaṅgā*.

*Avantī* (195) used for both Ujjain and the area in which Ujjain is situated.

*Aśvatīrtha* (237) near Kanauj at the confluence of the Ganges and the *Kāli-nadī* (*Ikṣumatī*).

*Āmalaka-grāma* or *Sahya-Āmalaka-grāma* (254-255). Probably Tirunelli in Malabar.

*Ujjānaka* (247) Nando Lal Dey takes it to be *Udyānaka* in Kāfiristān (p. 211), on the Indus.

*Ujjainī* (195-57), Ujjain.

*Uttara-Mānasa* (248) the reach of the river Phalgu upto Gayā (N. L. Dey, *op. cit.* p. 156).

*Ṛṣabha-parvata* (251) a Viṣṇu-kṣetra in South India, probably the Alagar Hill temple near Madura.

